माणिकचंद्र-दिगम्बरजैन-ग्रन्थमाला, दशम पुष्प ।

श्रीमद्वाराजसूरिविरचितः

# प्रमाणनिर्णयः ।



जयपुरनिवासि–

पण्डितइन्द्रलालसाहित्यशास्त्रिणा ।

वेरनीग्राम निवासि–

पण्डितखूबचन्दशास्त्रिणा च

सम्पादितः संशोधितश्च ।



प्रकाशिका—

माणिकचन्द-दिगम्बर-जैन-ग्रन्थमाला समितिः ।



अधिक भाद्रपद, वीर निर्वाण सं० २४४३ ।

विक्रमाब्द १९७४ ।

# निवेदन ।



इस ग्रन्थके कर्त्ता प्रसिद्ध तार्किक श्रीवादिराजसूरि हैं जिनका विस्तृत परिचय इस ग्रन्थमालाके चौथे ग्रन्थ पार्श्वनाथचरितकी भूमिकामें दिया जा चुका है। यह ग्रन्थ अभीतक अप्राप्य था। इसका सम्पादन और संशोधन एक ही प्रतिपरसे किया गया है जो जयपुरके एक जैन-मन्दिरके पुस्तक-भण्डारसे प्राप्त हुई थी और प्रायः शुद्ध थी। इसके लिए उक्त भण्डारके अधिकारियोंको शतशः धन्यवाद।

—मंत्री।

# माणिकचन्द्-दिगम्बर-जैन-ग्रन्थमालासमिति।

( प्रबन्धकारिणीसभाके सभ्य। )



श्रीसरस्वत्यै नमो नमः ।

श्रीमद्वादिराजसूरिविरचितः

# प्रमाणनिर्णयः ।



मङ्गलाचरणम् ।

श्रीवर्द्धमानमानम्य जिनदेवं जगत्प्रभुम् ।
सङ्क्षेपेण प्रमाणस्य निर्णयो वर्ण्यते मया ॥ १ ॥

---

## प्रमाणलक्षणनिर्णयः ।

सम्यग्ज्ञानं प्रमाणं प्रमाणत्वाऽन्यथाऽनुपपत्तेः । इदमेव हि प्रमाणस्य प्रमाणत्वं यत्प्रमितिक्रियां प्रति साधकतमत्वेन करणत्वं । तच्च तस्य सम्यग्ज्ञानत्वे सत्येव भवति नाऽचेतनत्वे नाऽन्यसम्यग्ज्ञानत्वे । [1]ननु च तत्क्रियायामस्त्येवाचेतनस्यापीन्द्रियलिङ्गादेः करणत्वं, चक्षुषा प्रमीयते धूमादिना प्रमीयत इति । [2]तत्राऽपि प्र-

---

१ "ननु च" शब्दोऽत्र विरुद्धोक्तौ । नैयायिकमतमिदम् । २ इंद्रियलिंगादावपि ।

मितिक्रियाकरणत्वस्य प्रसिद्धेरिति चेत् ।–ननु च प्रमितिर्नामाव्युत्पत्त्यादिव्यवच्छित्तिरेव । सत्यामेव तस्यां चेतनस्येतरस्य वा प्रमितत्वोपपत्तेः । न च तत्राऽचेतनस्य करणत्वमविरोधात् । विरोधिनो हि कुतश्चित्कस्यचिद् व्यवच्छित्तिः, प्रकाशादिवान्धकारस्य । नह्यचेतनस्याप्यव्युत्पत्त्यादिना कश्चिदपि विरोधो यतस्ततोऽपि तद्व्यवच्छित्तिः परिकल्प्येत, सम्यग्ज्ञानात्तु तद्व्यवच्छित्तिरुपपन्नैव तस्य व्यवसायात्मकत्वात् । व्यवसायस्य चाऽव्युत्पत्त्यादिना विरोधप्रसिद्धेः । न हि व्यवसितमेव किञ्चिदव्युत्पन्नमाशङ्कितं विपर्यस्तं वा भवति । तदभाव एव तद्भावस्योपपत्तेः । अतः सम्यग्ज्ञानस्यैव तत्र करणत्वम् । अचेतनस्य त्विन्द्रियलिङ्गादेस्तत्र करणत्वं गवाक्षादेरिवोपचारादेव । उपचारश्च तद्व्यवच्छित्तौ सम्यग्ज्ञानस्येन्द्रियादिसहायतया प्रवृत्तेः । तन्नाऽचेतनस्य तत्र करणत्वं मुख्यवृत्त्या सम्भवति, नाऽप्यसम्यग्ज्ञानस्य । न हि तद्व्यापारपरामृष्टस्याऽव्युत्पत्त्यादिविकलतया भावस्य प्रमितत्वमुपपन्नं, तदसम्यक्त्वस्यैव तथासत्यभावापत्तेः । अव्युत्पत्त्यादिप्रत्यनीकस्य स्वभावस्यैव सम्यगर्थत्वात् । तस्य वा सम्यग्ज्ञानेऽपि भावे वाचनिकमेव तस्यासम्यग्ज्ञानत्वं भवेन्न वास्तवम् । ततः सम्यग्ज्ञानादेव व्यवसायात्मनस्तद्व्यवच्छित्तिः । यद्येषा न व्यवसायरूपा न प्रमाणस्य सम्यग्ज्ञानात्मनः फलं भवेत्, व्यवसायरूपत्वे सत्येव तदुपपत्तेः । अत एवोक्तं "प्रमाणस्य साक्षात्फलसिद्धिः स्वार्थे-

---

१ "प्रश्नावधारणानुज्ञाऽनुनयामंत्रणे ननु" इत्यमरः । २ अनध्यवसायः । ३ अनध्यवसितम् । ४ शङ्कितम् । ५ पदार्थस्य । ६ वाङ्मात्रमेव । ७ सत्यं । ८ "तर्हीति" शिष्टांशः । ९ अज्ञाननिवृत्तिर्हानोपादानोपेक्षाबुद्धयः फलं । १० जैनेनेति शेषः । ११ ज्ञप्तिः ।

विनिश्चय " इति। व्यवसायरूपा चेत्तर्हि व्यवसायात्तद्व्यवच्छित्तिरिति तद्व्यवच्छित्तेरेव तद्व्यवच्छित्तिरित्युक्तं भवति, तच्चानुपपन्नमेव । भेदाऽभावे क्रियाकारकभावस्यानुपपत्तेरिति चेन्न भेदस्याऽपि भावात् ।

द्विरूपं हि व्यवसायस्वभावसंवेदनं, प्रवृत्तिरूपं निवृत्तिरूपं चेति । नहीदमव्युत्पत्त्यादि निवृत्तिरूपमेव, नीरूपत्वापत्तेः । नाऽपि प्रवृत्तिरूपमेव, स्वरूपादिनेवाऽव्युत्पत्त्यादिरूपेणाऽपि तद्रूपत्वापत्तेः । न चैवमेकान्ततो निवृत्तिरूपतया प्रवृत्तिरूपतया च तस्याऽप्रवेदनात् । अत एवोभयस्वभावे तस्मिन् प्रवृत्तिरूपतया साधकतमस्याव्युत्पत्त्यादिनिवृत्तिरूपतया क्रियाभावस्य भावान्न क्रियाकारकभावस्याऽनुपपत्तिः । कथमेवमपि प्रमितिक्रियायां तत्सहभाविनः संवेदनस्य साधकतमत्वमितिचेन्न । प्रागपि भावात्, तत एव संवेदनात्प्रागपि विषयान्तरे प्रमितिक्रियानिष्पत्तेः । अन्यदेव तत्संवेदनं विषयभेदे तद्भेदस्याऽवश्यंभावादिति चेत् । न । युगपदप्येवं प्रसङ्गात्, तथाच कथं सेनावनादिप्रतिपत्तिः ।

न हि करितुरगादिधवखदिरादश्चैकसंवेदनविषयत्वाभावे तत्प्रतिपत्तिः संभवति । युगपद्विषयभेदेऽपि एकमेव संवेदनं, तथा तस्यानुभवादिति चेन्न । क्रमेणापि तथा तदनुभवस्याविशेषात् । परापरसमयव्याप्तेरनुभवगम्यत्वे कुतो न तस्याऽऽजन्ममरणावधिरप्यनुभव इति चेन्न । यावच्छाक्तिकमेवानुभवस्य तत्र व्यापारात् । अन्यथा वर्त्तमानेऽपि वस्तुनि सर्वत्राऽपि

१ आत्म । २ तथास्त्विति चेत् । ३ अनिश्चयात् । ४ प्रमितेः प्रागपि संवेदनस्य भावात् । ५ यत्पूर्वं विषयांतरे प्रमितिक्रियामुपजनयति । ६ युगपदिति विषयभेदात्संवेदनभेदे सति । ७ जैनः । ८ अन्यः । ९ विषयभेदेऽप्येकत्वप्रकारेण ।

तस्य व्यापारोपनिपातात् । कथमेवमप्यन्वितज्ञानाविष्वग्भावे तत्तत्समयभाविन्योऽर्थप्रमितयो व्यतिभिद्यन्ते इति चेत्, युगपद्भाविन्यः कथं ? तदानीमेकैव करितुरगादिविषया प्रमितिरपीति चेन्न, तस्यास्तुरगोन्मुखस्वभावत्वे तद्विषयतया नरवारणादेरपि तुरगरूपत्वापत्तेः । अतत्स्वभावत्वे तया तुरगस्याऽव्यवस्थापनप्रसङ्गात् । नरवारणादेरपि तत्तदुन्मुखस्वभावयैव तया विषयीकरणं न तुरगोन्मुखस्वभावयैव यदयं प्रसङ्ग इति चेत्, सिद्धं तर्हि युगपत्प्रमितेर्नानात्वं, औन्मुख्यनानात्वे तद्रूपतया तत्राऽपि नानात्वस्योपपत्तेः । अतो युगपदिव क्रमेणाऽपि अन्वितज्ञानाविष्वग्भावेऽपि व्यतिभेदोपपत्तेः । तत्र तत्र प्रमितौ तस्यैवान्वयिनः संवेदनस्य साधकतमत्वं, नाचेतनस्येन्द्रियलिङ्गादेः, नाप्यसम्यग्ज्ञानस्याध्यवसायादेरिति स्थितम् ।

तस्य संवेदनस्य स्वरूपमर्थश्चेति द्विविधो विषयः । तत्रोभयत्रापि तत एव प्रमितेः । कः पुनरर्थो नाम यत्र ततः प्रमितिरिति चेत्, संवेदनबहिर्भाविनीलादिरेव; यद्यसौ प्रकाशते न कथमस्ति ? व्योमकुसुमादिवत् प्रकाशते चेत्, न संवेदनबहिर्भावस्तस्य प्रकाशस्यैव संवेदनत्वेन प्रसिद्धेऽपि संवेदने प्रतिपत्तेः । संवेदनं प्रकाशरूपमेव, नीलादिस्तु कदाचिदप्रकाशोऽपि, ततस्तस्यार्थत्वं प्रकाशबहिर्भावात् इति चेत् । अप्रकाशावस्थस्य यदि न तस्य प्रतिपत्तिः कथमस्तित्वमतिप्रसङ्गात् । प्रतिपत्तिश्चेन्न प्रकाशवैकल्यं, प्रकाशवत्त्वादेव प्रतिपन्नतोपपत्तेः । ततो नीलादेः प्रकाशबहिर्भावेन नार्थत्वमिति-कथं तस्य संवेदनादन्यतः

१ परस्परं भिद्यंते । २ प्रमितानां । ३ पूर्वोत्तरसमये । ४ ज्ञानाद्वैतवादी सौगतो वक्ति । प्रमितेर्भिन्नः कः पुनरर्थो नामेति प्रश्नस्याशयः । ५ जैनः । ६ भवतीति शेषः ।

प्रतिपत्तिः? स्वत एव तदुपपत्तेरिति चेत् । सत्यमस्ति प्रकाशो नीलादेः स यदि स्वत एव भवति तस्य बोधरूपत्वं । न चैवं, परत एव तद्भावात् । ततोऽपि भवतस्तस्य बोधत्वमेव रूपमिति चेन्न, बोध्यत्वस्यैव तद्रूपत्वात् । किं पुनरिदं बोध्यत्वमर्थस्य, किं पुनर्ज्ञानस्यापि बोधकत्वं? परनिरपेक्षमपरोक्षत्वमिति चेत् । अर्थस्यापि परापेक्षं तदेव बोध्यत्वं किं न स्यात् । परस्यैवार्थप्रतीतिवेलायामप्रतिवेदनादिति चेन्न । नीलं[3] वेद्मि पीतं वेद्मीति नीलादेरन्यस्यैव तद्वेदनस्यैवानुभवनात् । अनन्यत्वे हि नीलमित्येव वेद्मीत्येव वा स्यान्नोभयमस्ति चोभयं ततोऽनुभवप्रसिद्धत्वान्नीलादेस्तत्संवेदनान्यत्वस्य कथमप्रतीतिविकल्प एवायं कश्चिन्नीलं वेद्मीति नानुभवो न च ततः क्वचिदन्यत्वनिश्चयो वासनामात्रनिबन्धनत्वेन तस्य विप्लवत्वात्, अन्यथा केशादेरपि तद्वेदनस्य ततस्तत्प्रसङ्गात् । केशादिकं वेद्मीति तैमिरिकस्य तत्रापि विकल्पप्रादुर्भावात् भवतु, इति चेन्न । केशादेर्बहिरभावात् । बहिरसत एव ततस्तद्वेदनस्यान्यत्वमिति चेन्न । तदप्रतिभासे तत इति तद्वेदनस्येत्यप्यनुपपत्तेः । न चासतः प्रतिभास इति चेन्न । विभ्रमसामर्थ्यात् असतोऽपि तदुपपत्तेः अन्यथा विकल्पे नीलतद्वेदनान्यत्वस्याप्यप्रतिभासोत्पत्तेः, असत्त्वाविशेषात् । सत्यम् । विकल्पस्याऽपि न तत्प्रतिभासित्वं स्वसंविन्मात्रपर्यवसितत्वात्, विकल्पान्तरमेव तु तत्र तत्प्रतिभासित्वमवकल्पयतीति चेन्न । तेनाऽप्यसतस्तस्यान-

१ परतो भवत्प्रकाशरूपत्वात् । २अर्थाद्भिन्नस्यैव ।३ जैनो वक्ति ।४ व्यभिचारात् । ५ विकल्पात् क्वचिदन्यत्वनिश्चये । ६ अन्यत्वप्रसंगो भवतु । ७ असत्त्वात् । ८ असतो ऽप्रतिभासो वा प्रतिभास इति विकल्पयन्नाह । ९ द्वितीयविकल्पो न घटते सौगतविशेषे । १० कर्तृतापन्नं । ११ स्वस्मिन्नविद्यमानस्य ।

वकल्पनात् । पुनर्विकल्पान्तरात्तस्य तदवकल्पकत्वे चानवस्थापत्त्या नीलतद्वेदनविवेकविकल्प एव न भवेत् । न चैवं, तस्य तस्य प्रतीतेस्ततो न सङ्गतमिदं, विकल्पो ग्राह्यग्राहकोल्लेखेनोत्पत्तिमान्, सोऽपि स्वरूपे ग्राह्यग्राहकरूपरहित एव अपरेण तथा व्यवस्थाप्यत इति । ततो न केशादेरपि तद्वेदनस्यानर्थान्तरत्वं यतस्तच्चिद्दर्शनेन नीलादेरपि तद्वेदनस्य तत्त्वमवकल्प्येत । ततो बहिरेव तद्वेदनान्नीलादिबहिरर्थः । तत इदमप्यनुपपन्नम् ।

संवेदनेन बाह्यत्वमतोऽर्थस्य न सिद्ध्यति ।
संवेदनाद्बहिर्भावे स एव तु न सिद्ध्यति ॥

इति संवेदनेनैव नीलादेस्तद्बहिर्भावस्योक्तया नीत्या व्यवस्थापनात् । यदि संवेदनाद्बहिरेव नीलादिः कथं तस्य वस्तुसत्त्वं ? तैमिरिककेशादिवदिति चेत्, तत्केशादेरपि न संवेदनबहिर्भावेनावस्तुसत्त्वमपि तु बाधकत्वात् । न चेदं प्रसिद्धे नीलवस्त्रादावस्तीति । वस्तु सन्नेवाऽयं कर्तव्यश्चैवमभ्युपगमः । अन्यथा नीलादेर्बहीरूपत्वेनेव संवेदनस्यापि प्रतिभासमानत्वेन तैमिरिककेशादिना साधर्म्यादवस्तुसत्त्वापत्तेः । अतः संवदनबहिर्भावादबाधकत्वेन वस्तुसत्त्वाच्चार्थ एव नीलादिरवगन्तव्यः । यत्पुनरेतन्मतं । यथैव हि ग्राहकाकारः स्वरूपेणापरोक्षो न ग्राहकान्तरभावात् । तथा तेन समानकालोऽपि नीलादिक इति । तत्र भवतो यदि तादृशो नीलादिरप्रतिपत्तिविषयः कथं यथैवेत्यादिवचनं प्रतिपाद्यवत् । प्रतिपत्तिविषयश्चेत्तर्हि कथं स्वरूपेणाऽपरोक्षत्वं, तस्य भवेत्प्रतिपत्तिविषयतया परत एव तदुपपत्तेः । यदप्येतदपरं यथा

१तदन्यत्त्वविकल्पाभावो न च। २अन्यविकल्पेन विकल्पांतरेणेति यावत्। ३अन्यत्वं। ४ हेतुना। ५न्यायात्। ६ तैमिरिककेशादिवत्। ७ परमार्थसत्। ८ज्ञायत इति शेषः। ९ तव। १० प्रतिपाद्यार्थोऽस्यास्तीति प्रतिपाद्यवत्। ११ त्वज्ज्ञानविषयतया।

चक्षुरादिकात् ग्राहकाकारः, तथा तत्समानकालो ग्राह्याकारोपीति तत्राऽपि सभासमवायिनां चक्षुरादेर्बहुत्वात् तज्जन्मनो विकसितकुवलयदलनीलच्छायानुवर्त्तिनो नर्त्तकीरूपस्यापि बहुत्वेन भवितव्यम् । नचैवं, तद्रूपैकत्वे सर्वेषां तेषामेकवाक्यताप्रतिपत्तेः । व्यामोहादेव कुतश्चित्तत्र तेषामेकवाक्यत्वं, वस्तुतो नानैव तद्रूपमितिचेत् । कोशपानादेतत्प्रत्येतव्यं न प्रमाणतः । कुतश्चिदपि तदभावात् कुतश्चेदमवगतं ग्राह्याकारोऽपि चक्षुरादेरिति ग्राहकाकारवत् । तत्रापि तदन्वयव्यतिरेकानुविधानस्य भावादिति चेत्, कुतः पुनस्तद्भावस्यावगतिः? न प्रत्यक्षात्, "न हि प्रत्यक्षसंवित्तिरन्वयव्यतिरेकयोरिति" स्वयमेवाभिधानात् । नाप्यनुमानात्प्रत्यक्षाभावे तत्पूर्वकत्वेन तस्याप्यसंभवात् । तद्वासनामात्रजन्मनो विकल्पात्तदवगतौ वा अवास्तव एव तद्भाव इति न ततो नीलादेरपरोक्षतया चक्षुरादेरुत्पादः शक्यव्यवस्थापनः । ततो नीलादिव्यतिरिक्तवेदनविषयतयैवापरोक्षभावमनुभवन्नर्थ एवेत्युपपन्नं तद्विषयतया सम्यग्ज्ञानस्यार्थविषयत्वम् ।

भैवतु तद्विषयत्वमेव तस्य न स्वविषयत्वं स्वात्मनि क्रियाविरोधात् छिदिक्रियावत्तथाहि ।–विरुद्धा ज्ञानस्य स्वात्मनि प्रमितिः क्रियात्वात् खड्गात्मनि छिदिक्रियावत्; न हि खड्गः स्वात्मानं छिन्दन्नुपलभ्यत इति चेत्, न क्रियात्वमात्राच्छिदेः खड्गात्मना विरोधोऽपि तु तदात्मनो भावरूपत्वात्; छिदेश्च प्रध्वंसविशेषत्वेन अभावस्वभावत्वात् । भावाभावयोश्च परस्परपरिहारोपपत्तेः । नचैवं ज्ञानात्मतत्प्रमित्योर्भावेतरस्वरूपत्वं येन तयोरन्योन्यपरिहारेणावस्थानाद्विरोधपरिकल्पनमतो न विरोधादस्वप्रतिपत्तिकत्वं ज्ञानस्य शक्यव्यवस्थं कथं चास्वप्रमितिरूपत्वे

१ ज्ञाने ज्ञायते । २ पुरुषाणामिति शेषः । ३ नैयायिको वदति ।

तस्य नियत एवार्थो गोचरो न सर्वोऽपीति, नियतस्यैव तस्य प्रतिभासनादिति चेत्कुत इदमवगन्तव्यम्[१]।

न तावत्तत एव स्वप्रतिपत्तिवैकल्यात्। न हि स्वप्रतिपत्तिविकलादेव ज्ञानात्तत्र नियतार्थप्रतिभासनमन्यैद्र्ना शक्यावबोधं मा भूत्ततस्तदवबोधस्तद्विषयात्तु ज्ञानान्तराद्भवत्येवेति चेन्न, तस्यापि स्वप्रतिपत्तिवैकल्ये तत्रापि तद्विषयस्य ज्ञानस्य नियतार्थगोचरत्वमेव प्रतिभाति न निरवशेषवस्तुगोचरत्वमिति-तत एवावगन्तुमशक्यत्वात्। तस्यापि नियतविषयत्वमन्यतस्तद्विषयादेव ज्ञानादवगम्यत इति चेन्न, अनवस्थाप्रसंगात्। सत्येवमपरापरज्ञानपरिकल्पनस्यावश्यंभावात्। ततः सुदूरमपि गत्वा क्वचिन्नियतविषयत्वमध्यवसातुकामेन तद्विषयस्य ज्ञानस्य स्वप्रतिपत्तिरूपत्वमभ्युपगन्तव्यम्। अन्यथा ततस्तद्विषयविज्ञाननियतार्थगोचरत्वप्रतिपत्तेर्दुरुपपादकत्वात्। तथा च सिद्धमर्थज्ञानस्यापि तद्वत्स्वप्रतिपत्तिरूपत्वमविशेषात्।

यत्पुनरिदमनुमानं, "नात्मविषयमर्थज्ञानं वेद्यत्वात्कलशादिवदिति" तत्र न तावद्वेद्यत्वं नाम सामान्य तस्य नित्यत्वेन सर्वदा भावेषु प्रसंगात् सामान्यादिषु तदभावापत्तेश्च। न हि सामान्यादिषु सामान्यं द्रव्यादित्रय एव तदभ्युपगमात्सामान्यादिषु तदभावापत्तेश्च। अस्ति च तत्रापि वेद्यत्वं, अन्यथा व्योमकुसुमादिवत्तदभावापत्तेः, अतो न तत्सामान्य। भवतु साधर्म्यमेव तद्वेदनविषयत्वस्य वेद्यत्वस्य चाभिधानात्। तस्य सर्वपदार्थसाधारणतया द्रव्यगुणकर्मस्विव सामान्यविशेषसमवायेष्वप्यविरोधात्। न तदभावापत्तिरितिचेत् किं पुनस्तद्वेदनं यद्विषयत्वं वेद्यत्वमर्थज्ञानस्योच्येत, तद्वे-

१ स्वस्मिन्निति शेषः। २ ज्ञाने। ३ सर्वार्थप्रतिभासन। ४ प्रथमज्ञाने। ५ द्वितीयस्य ६ दुर्घटत्वात्। ७ स्वप्रतिपत्तिरूपत्वे सति। ८ प्रथमज्ञानस्य। ९ पदार्थेषु।

वार्थज्ञानमिति चेन्न । अनात्मविषयत्वे तस्य तद्वेदनत्वानुपपत्तेः, आत्मविषयत्वे च हेतुप्रतिज्ञयोर्[1]विरोधात् । त[2]स्मादन्यदेव तदेकार्थ[3]समवेतम[4]नन्तरं तद्वेदनमिति चेन्न, तस्याद्याप्यसिद्धत्वात् ।

अर्थज्ञानं ज्ञानान्तरवेद्यं वेद्यत्वात् कलशादिवदित्यत एवानुमानात्तत्सिद्धिरिति चेन्न, परस्पराश्रयापत्तेः, तत्सिद्धावनुमानमनुमानाच्च तत्सिद्धिरिति ।

[5]अन्यतस्तत्सिद्धिरिति चेन्न । अनुमानस्य वैयर्थ्यप्रसंगात् । किं वा तदन्यत् ? प्रत्यक्षमिति चेन्न, तस्या[6]प्यव्यतिरिक्तस्यान[7]भ्युपगमात् । व्यतिरिक्तमिति चेत्, कि[8]मयं नियमः, सति विषये तद्वेदनमवश्यमिति । तथा चे[9]दर्थज्ञानवेदनवत्तद्वेदनेऽप्यन्यत्तद्वेदनं तत्राऽप्यन्यदित्यासंसारं तद्वेदनप्रबंधस्यैव प्रवृत्तेर्न विषयान्तरसंचारो वेदनस्य भवेदिति कथमनुमानम् ।

धर्मिज्ञानतज्ज्ञानप्रबंधस्या[10]नुपरमे हेतुदृष्टान्तयोरनुपपत्तेर्माभूदयं नियम इति चेन्न तर्हि धर्मिण्यपि वेदननियम इति कथं तस्य तद्वेद्यत्वस्य हेतोर्वा सिद्धिरित्यसंभव एवानुमानस्य भवेत् ।

अथ वेद्यत्वमर्थज्ञानस्य न विशिष्टमुपादीयते, त[11]देतत्कृतत्वेन अवशिष्टस्यैव तस्य हेतुत्वादिति चेत्, कथं तस्यानात्मविषयत्वे साध्ये हेतुत्वं ? तेनैव कलशादौ तस्य व्याप्तिदर्शनादिति चेत्, न, व्याप्तिज्ञाने आत्मविषयत्वेनापि त[12]स्य तद्दर्शनात्, न हि प्रा[13]देशिकी व्याप्तिः । साध्यप्रतिपत्तेर्निमित्तं तत्पुत्रत्वादावपि

१ विरुद्धत्वादिति भावः । २ अर्थज्ञानात् । ३ तेन सहैकस्मिन्नर्थे समवेतं । ४पश्चादुत्पन्नं । ५ तृतीयज्ञानात् । ६ द्वितीयज्ञानाव्यतिरिक्तस्य । ७ कुतः स्वप्रतिपत्तिप्रसंगात् । ८ प्रभवति न वेति शेषः । ९ प्रथमज्ञानलक्षणे । १० अनवस्थाने । ११ अन्यज्ञानकृतत्वेन । १२ साध्यस्य । १३ प्रदेशे भवा प्रादेशिकी ।

तद्भावात् इर्यामत्वादेस्ततोऽपि सिद्धिप्रसंगात्। अपि तु साकल्येन। तत्र यद् यद् वेद्यं तत्तत्सर्वमनात्मविषयमिति किंचिद्विज्ञानमुत्पद्यमानमात्मविषयमपि भवितुमर्हति। अन्यथा तद्वेद्यत्वस्यानात्मविषयतया व्याप्तेस्तत एवाप्रतिपत्तिप्रसंगात्, तथाच व्यभिचारि वेद्यत्वं व्याप्तिज्ञानेन तत्रात्मनि विषयत्वस्याभावेऽपि तस्य भावात्। एवमीश्वरज्ञानेनापि। न हि तस्याप्यनात्मविषयत्वं, असर्वविषयत्वप्रसंगात्। तथा च कथं तस्य तज्ज्ञानेन सर्वज्ञत्वं? तेन तदपरस्य सकलस्य तस्य च तदन्येन ग्रहणादिति चेत्, कथं तदन्येनाप्यस्वविषयेण स्वविषयतया परस्परपरिज्ञानमित्यप्रतिपत्तिरेव। तेन तस्यासकलप्रतिपत्तेरनभ्युपगमादित्यतोऽस्ति तस्याऽऽत्मविषयत्वं। तथा चेत्किमपराद्धं तद्विषयेण ज्ञानेन यत्तस्यैवात्मविषयत्वं नेष्यते इति सिद्धम तेनापि व्यभिचारित्वं वेद्यत्वस्य। तत्रानात्मविषयत्वाभावेऽपि तस्य भावादिति–नानुमानादप्यनात्मविषयत्वमर्थज्ञानस्यात्मविषयत्वं तु तस्यानुभवप्रसिद्धमतः किं तत्रानुमानेन, यदि निर्बन्धस्तदुच्यत एव। अर्थज्ञानमात्मविषयमर्थविषयत्वात्, यत्पुनर्नात्मविषयं तदर्थविषयमपि न भवति यथा घटादि। अर्थविषयं विवादापन्नं ज्ञानं तस्मादात्मविषयमिति केवलव्यतिरेकी हेतु, तस्य परैरपि गमकत्वाभ्यनुज्ञानात्। तन्नार्थविषत्वमेव ज्ञानस्येत्युपपन्नं नैयायिकस्य, स्वविषयस्वस्यापि तत्र भावात्।

मीमांसकस्त्वाह। परोक्षमेव सकलमपि ज्ञानं स्वप्रकाशवैकल्यात्, प्रत्यक्षं तु बहिरर्थस्य तेन तस्यैव प्रकाशनात् इति।

१ साध्यस्य। २ व्याप्तिज्ञानं। ३ व्याप्तिज्ञानस्यात्मविषयत्वेन। ४ द्वितीयज्ञानेनेत्यर्थ। ५ वस्तुनः। ६ द्वितीयज्ञानस्यात्मविषयत्वेन। ७ द्वितीयज्ञानविषयेण। ८ यस्मात् हेतोः।

तत्र प्रकाशकत्वे सति कुतस्ततोऽर्थस्यैव प्रकाशो न स्वरूपस्य? शक्तिवैकल्यात्। तथाहि, यद्यत्राशक्तं न तत्तस्यप्रकाशकं, यथा चक्षू रसादेरशक्तं च सकलमपि संवेदनं स्वप्रकाशे इति तद्वैकल्यमिति चेत्। अस्यानुमानस्यापि यदि तद्वैकल्यं, अनुमानान्तरात्तस्यापि तदन्तरात्तद्वैकल्यं प्रतिपत्तव्यमिति कथमनवस्थितिर्न भवेत्? अभिरुच्यभावात्, यावदभिरुचिस्तावदेव भवत्यनुमानस्य प्रबंधस्तदभावे त्ववस्थितिरेवेति चेन्न, तर्हि कुतश्चिदपि सकलस्य संवेदनस्य प्रकाशवैकल्यप्रतिपत्तिरिति—कथं तत्र परोक्षत्ववचनं? तत सकलस्यापि संवेदनस्य स्वप्रकाशवैकल्यमनुमानादेवाजिगमिषता स्वप्रकाशकमेव तदभ्युपगन्तव्यम्। तद्वदर्थज्ञानमपि । तस्याप्यनुमानवदन्तोरूपतया परिस्फुटस्यावलोकनात्। तच्छक्तेरपि तत एवाध्यवसायात्। सत्यपि परोक्षत्वे कुतस्तस्य प्रतिपत्तिः अन्यथा तदभ्यनुज्ञानानुपपत्ते ।

अर्थप्रकाशादेव तस्य तदन्यथानुपपन्नतया निर्णयादिति चेन्न तत्प्रकाशस्य ज्ञानधर्मत्वे ज्ञानवत्परोक्षस्यैव भावात्, तत्र च तदन्यथानुपपत्तेर्निर्णयः परिज्ञात एव तदुपपत्तेः । परिज्ञात एवायं स्वत इति चेत्, न तर्हि परोक्षत्वं ज्ञानस्य। तद्धर्मस्यार्थप्रकाशस्य स्वप्रकाशत्वे तदव्यतिरेकिणो ज्ञानस्यापि तदुपपत्ते । अन्यतस्तस्य परिज्ञानमिति चेत् किं पुनरत्र तदन्यत् प्रत्यक्षमिति चेन्न तस्येन्द्रियसंप्रयोगादुत्पत्तेः ज्ञानधर्मे चार्थप्रकाशे तदभावात् कथं

१ जैनः पृच्छति । २ मीमांसको वदति । ३ ज्ञानं न स्वप्रकाशकं तत्र तस्याशक्तत्वात् । ४ आकाङ्क्षाभावात् । ५ जैन आह । ६ अनुमानात् । ७ ज्ञातुमिच्छता मीमांसकेन । ८ अंतर्मुखरूपतया । ९ तत्प्रतिपत्तिरिति शेषः । १० जैन आह । ११ निश्चिते वस्तुनि । १२ स्वतः परतो वा इति शंकायां स्वत इति चेत् । १३ जैन आह ।

तत्र प्रत्यक्षत्वं सत्यपि तस्मिंस्तत्प्रकाशवत्तद्धर्मिणो ज्ञानस्यापि तत एव प्रतिपत्तेर्व्यर्थमनुमानं भवेत्। तत्र ज्ञानधर्मस्तत्प्रकाशः। भवत्वर्थस्यैव सधर्म इति चेत्, न, तस्यापि स्वतः प्रतिपत्तिरर्थस्याचेतनत्वेन तदनुपपत्तेः। चेतनत्वे तु विज्ञानस्यैवावस्थिते। न बहिरर्थो नामेति तन्निबन्धनः कश्चिदपि क्रियाविधिः स्यात्। परतः प्रतिपत्तावपि तस्मादात्मज्ञानस्यैव कुतोऽनुमानं, न परज्ञानस्य ततोऽपि तत्प्रकाशसम्भवात्। तस्याप्रत्यक्षत्वेन तत्कृतस्य तत्प्रकाशस्याशक्यप्रतिपत्तिकत्वादिति चेन्न आत्मज्ञानस्याप्यप्रत्यक्षत्वाविशेषात्। तन्नार्थधर्मस्यापि तस्य कुतश्चित्सिद्धिः, नचासिद्धस्यान्यथानुपपत्तिनिर्णयो यतस्तदनुमानमर्थज्ञानस्य, तदुक्तम्। "अन्यथानुपपन्नत्वमसिद्धस्य न सिद्ध्यतीति" ततोऽर्थस्य प्रत्यक्षत्वमन्विच्छता प्रत्यक्षमेतज्ज्ञानमभ्युपगन्तव्यम्। अनुभवस्यापि तथैव भावात्। नचैवं स्वपरविषयतया मरीचिकातोयादिवेदनस्यापि प्रामाण्यप्रसङ्ग। सर्मीच एव तदुपगमात्। न च तद्वेदनस्य सम्यक्त्वं बाधवत्त्वात्। न समानविषयेण बाधस्ततः संवादेन सम्यक्त्वस्यैवोपपत्तेः। नापि विसदृशविषयेण नीलज्ञानेन पीतज्ञानेन पीतज्ञानस्य तत्प्रसंगात्। बाधोऽपि न स्वरूपापहार उत्पत्तिसमये तद्भावे तस्यानुत्पत्तिप्रसंगात्। अन्यदा च स्वयमेव नाशात्। नापि विषयापहारस्तस्य नराधिपधर्मत्वेन ज्ञानेष्वसंभवात्। नच फलापहार फलस्यापि विषयपरिच्छेदप्रवृत्त्यादे-

१ प्रवर्त्तत इति शेषः। २ प्रत्यक्षे। ३ अर्थप्रकाशधर्मिण। ४ मयि ज्ञानमस्ति अर्थप्रकाशाद्यन्यथानुपपत्तेः। ५ क्रियाविधेः। ६ स्वकीयस्य। ७ परकीयस्य। ८ उक्तप्रकारेण ज्ञानस्य स्वप्रकाशकत्वे सति। ९ ता–षष्ठी–सत्यस्येत्यर्थः। १० प्रभाकर आह। ११ उत्पत्तिसमयेऽन्यदा वा। १२ बाधमंतरेण प्रथमज्ञानस्य।

स्ततो दर्शनात् । न चापरो बाधप्रकार इति चेन्न, तद्विषयासत्त्वज्ञापनस्यैव बाधकत्वात्, तस्य च मरीचिकाप्रत्यये सति नेदं तोयं किंतु मरीचिका इत्याकारस्यावलोकनात् । कर्तव्यश्चैवमभ्युपगमोऽन्यथाबाधासत्त्वस्यापि अवबोधनानुपपत्तेः, न समानविषयेणेत्यादिविचारस्य वैयर्थ्योपनिपातात् । तन्न विपर्ययस्य प्रामाण्यमसम्यक्त्वात्, एवमव्युत्पन्नसंशययोरपि तत्रापि यथातत्त्वनिर्णयस्य सम्यक्त्वस्याभावात् । ततस्तोयादावेव तत्प्रत्ययस्य तद्भावः तस्य चाभ्यासदशायां स्वत एवावगमोऽन्यथा तु पद्मगन्धोदकाहरणादेर्लिङ्गविशेषात् । न चैवं लिङ्गप्रत्ययसम्यक्त्वस्याप्यन्यतो लिङ्गादवगमे ऽनवस्थानं दूरानुसरणेऽपि कस्यचिदभ्यस्तविषयस्य तत्प्रत्ययस्य संभवात् । ततः सुपरिज्ञानत्वात् ज्ञानेषु सम्यक्त्वस्यैवोपपन्नं, इदं सम्यग्ज्ञानमेव प्रमाणं अन्यथा तदनुपपत्तेरिति ।

देवस्य मतमुद्वीक्ष्य विचारज्ञानिनां प्रभोः ।
मयाऽभ्यधायि संक्षिप्य प्रमाणस्येह लक्षणम् ॥१॥

इति श्रीमद्वादिराजसूरिप्रणीते प्रमाणनिर्णये प्रमाणलक्षणनिर्णयः ॥

---

१ निवेदनस्य । २ प्रतियोगिभूतबाधज्ञानाभावे तदभावज्ञानानुपपत्तेः । ३ अनध्यवसायः । ४ न तु मरीचिकादौ तत्प्रत्ययस्य तद्भावः । ५ अनभ्यासदशायां ।

# प्रत्यक्षनिर्णयः ।



तच्च प्रमाणं द्विविधं, प्रत्यक्षं परोक्षं चेति । तत्र यत्स्पष्टावभासं तत्प्रत्यक्षम् । किं पुनरिदं स्पाष्ट्यं नाम[1] ? विशेषाववबोध इति चेन्न, सामस्त्येन संसारिज्ञाने क्वचिदपि तदभावात्, असामस्त्येन तद्भावस्य परोक्षे प्रत्यये[3]ऽभिधानस्य मानत्वात् । आलोकपरिकलितग्रहणं तदिति चेन्न, अव्याप्तेः, रूपज्ञान एव तस्य भावात्, न स्पर्शादिज्ञानेषु । न चैतेषामप्रत्यक्षत्वमेव, तत्प्रत्यक्षत्वस्य निर्विवादत्वात् । अव्यवहितग्रहणं तदित्यपि न मन्तव्यं, निर्मलस्फटिकव्यवहितेऽपि वस्तुनि स्पष्टस्यैव तज्ज्ञानस्यावलोकनात् । वृक्षोऽयं शिंशपात्वादित्यादेरनुमानस्यापि प्रत्यक्षत्वप्रसक्तिरव्यवहितग्रहणात्, तस्मादन्तर्मलविश्लेषनिबन्धनो विशुद्धिविशेष एव स्पाष्ट्यमित्युपपन्नम् ।

सामान्यविशेष स्पाष्ट्यमिति चेदभिमतमिदं विशुद्धिविशेषस्यैव तत्तत्प्रत्यक्षसदृशतया तद्विशेषत्वात् नित्यनिरवयवरूपस्य च तस्य प्रत्याख्यानात् । कुतः पुनरिदमवगतं स्पष्टमेव प्रत्यक्षमिति ? द्विबाहुरेकशिरा नर इत्यपि कुत ? तथैव प्रत्यक्षेणावेक्षणात्, । प्रत्यक्षस्य स्पष्टत्वे स्वानुभवनेन तथैवान्वीक्षणादिति समः समाधिः । सम्यग्ज्ञानस्य व्यवसायात्मकत्वे प्रत्य-

१ विमतं ज्ञान प्रत्यक्षं भवितुमर्हति विशेषावबोधकत्वात् । २ भागासिद्ध इति भावः । ३ परोक्षप्रमाणनिर्णयप्रस्तावे वक्ष्यमाणत्वा दिति निर्गलितोऽर्थः ।४अनैकान्तिकदोषो भवेदिति भावः । ५प्रतिपक्षमनुवृत्तरूपं सामान्यं परोक्षव्यावृत्तरूपं तदेव विशेषः ६ यौगमतं सामान्यविशेषोऽर्थात्परसामान्यं । ७ जैनः । प्राह ८ अवगतमिति शेषः । ९ बौद्धो वदति ।

क्षस्यापि तद्भेदस्य तदात्मकत्वेन भवितव्यं, नच तस्य तदस्ति, तेनाभिलापसंबद्धतया स्वविषयस्याग्रहणात् । तथा तद्ग्रहणस्यैव व्यवसायत्वादिति चेत्, नैवं, व्यवसायस्यैवाभावप्रसंगात् । अभिलापेन हि तद्वतैनैव विषयस्य संबन्धस्तत्र तदभावात् । स्मरणोपनीतेन संकेतकालप्रतिपन्नेनेति चेन्न । स्मरणस्य निर्विकल्पकत्वे तद्विषयस्य स्वलक्षणत्वेन क्वचिदुपनयनानुपपत्तेः । व्यवसायरूपत्वे च तेनापि स्वविषयस्याभिलापसंबद्धस्यैव स्मर्त्तव्यं, तदभिलापस्यापि तथाविधस्यैव तत्स्मरणेनेत्यनवस्थितिप्रसंगात् । स्मरणस्य तदनभिसंबद्धवस्तुवेदित्वेपि व्यवसायस्वभावत्वे प्रत्यक्षस्यापि तत्किं न स्यात् ? अभिलापसंबन्धवैकल्ये कुतस्तस्य व्यवसाय इति चेत्, अभिलापस्मरणस्यापि कुतः ? शब्दसामान्यतत्संबन्धयोग्यस्य तेन ग्रहणादिति चेत्, प्रत्यक्षेऽपि तत एव सोऽस्तु, तेनाऽपि सामान्यस्य वस्तुषु सदृशपरिणामस्य परिच्छेदात् । अन्यथा शुक्तिकादौ रजताद्यपेक्षया साधर्म्यदर्शनस्याभावात् कथं तन्निबन्धनस्तत्र रूप्याद्यारोपः । यत इदं सूक्तं भवेत्, 'शुक्तौ वा रजताकारो रूप्यसाधर्म्यदर्शनादिति'। न च साधर्म्यादपरं सामान्यमपि तस्य नित्यव्यापिस्वभावस्य क्वचिदप्यप्रतिवेदनात् । तद्विषयत्वेऽपि परामर्शवैकल्यादव्यवसायमेव प्रत्यक्षमिति चेन्न । नीलमिदं पीतमिदं इति तत्र परामर्शस्य प्रतिपत्तेः । प्रत्यक्षादन्य एव स. परामर्श इति चेन्न स्पष्टत्वेन प्रतिभासनात्,

१ अभिलापसंबद्धस्य स्वविषयस्येत्यर्थः । २ " विकल्पो नाम संश्रितः " इति वचनात्स्वाभिधानाविशेषापेक्षा एव निश्चयैर्निश्चीयंते इत्यभ्युपगमात् । ३ अभिलापसंबद्धस्वविषयग्रहणस्य व्यवसायत्वे । ४ अनन्यदेशकालाकारत्वेन । ५ वस्तुसंबद्धसामान्यग्रहणादेव । सदृशपरिणामस्यासामान्यत्वे । ६ कल्पना इति शेषः । ७ जैनः ।

स्पाष्ट्यमपि तत्र प्रत्यक्षप्रत्यासत्तेरध्यारोपितमेव न वास्तवमिति चेत्, प्रत्यक्षस्य चैतन्यमप्यर्थान्तरचेतनसंसर्गादध्यारोपितमेव न वास्तवमिति किं न स्यात् ? यतः सांख्यमतस्यानभ्युपगमः प्रत्यक्षादिज्ञानव्यतिरेकेण चेतनस्याप्रतिपत्तेरिति चेत् । न । परामर्शव्यतिरेकेण प्रत्यक्षस्याप्रतीतेः । विकल्पप्रतिसंहारवेलायां तथैव तस्य प्रतिपत्तिरिति चेत्, न । सकलचित्तवृत्तिविकलवेलायां चेतनस्य तथैवानुभवात्, अत एव एवोक्तं " तदा द्रष्टुः स्वरूपेऽवस्थान " मिति श्रूयत एव केवलं तादृशी वेला न कदाचिदप्युपलभ्यत इति समानमितरत्रं वेलायामपि ततो यथा प्रत्यक्षादेरन्यच्च चेतनमनध्यवसितेः । तथा तत एव न परामर्शादन्यत्प्रत्यक्षमपि । अत एव परामर्शात्मकत्वं स्पाष्ट्यमेव मानसप्रत्यक्षस्य प्रतिपादितमलङ्कारे ।—

इदमित्यादि यज्ज्ञानमभ्यासात्पुरतः स्थिते ।
साक्षात्करणतस्तत्र प्रत्यक्षं मानसं मतम् ॥ इति

कथं पुनर्व्यवसायात्मकत्वे प्रत्यक्षस्याश्वं विकल्पयतो गोदर्शनं व्यवसायेन गां पश्यतस्तत्र तदन्यारोपस्यासंभवात् । निश्चयारोपमनसोर्बाध्यबाधकभावादिति चेन्न । तदा दर्शनेनाश्वसाधर्म्यस्यैव गवि व्यवसायात्तत्र चारोपस्यानुपपत्तेर्विशेषाकारे तस्यारोपो न च तस्य व्यवसायः । कुतस्तर्हि तत्र तदारोपइति चेत् साधर्म्यनिर्ण-

---

१ चेतनसंसर्गाच्चेतना बुद्धिरित्यस्य २ बौद्धो वदति ३ " संहृत्य सर्वतश्चिंतां स्तिमितेनान्तरात्मना । स्थितोऽपि चक्षुषा रूपमीक्षते साऽक्षजा मति " रिति ४ सांख्यैरिति शेषः ५ यथा शब्देन दृष्टं तः परामृश्यते ६ भिन्न ७ अनिश्चयात् ८ वस्तुनीति शेषः ९ बौद्धो वदति १० गवि अश्वोऽयमित्याद्यारोपस्य ११ निश्चयज्ञानारोपज्ञानयोः १२ गोरिति शेषः १३ खंडमुंडाकारे ।

यादेव तस्य तदनुकूलतया प्रतीतेः । भवतस्तु दुःपरिहर एवायं पर्यनुयोगः । मानसप्रत्यक्षेण नीलादिवत् क्षणक्षयादेरपि निर्णये कथं तत्राक्षणिकत्वाद्यारोपो यतस्तद्व्यवच्छेदार्थमनुमानपरिकल्पनमिति । न च तस्य तेनानिर्णयो नीलादावपि तत्प्रसंगात् । असकलप्रतिपत्तेरनभ्युपगमात् । न चास्माकं परामर्शभावेन प्रसितं, मनोव्यवसायस्य विनापि तेनाव्युत्पत्त्यादिविरोधिरूपतयैवोपपत्तेः । अतद्रूपस्य तु न प्रामाण्यं अविसंवादवैकल्यात् । तथा हि । यदविसंवादविकलं न तत्प्रमाणं, यथा अज्ञस्य विषदर्शनं, तद्विकलं च सौगतपरिकल्पितं दर्शनमविसंवादो हि इत्थं गेयमित्थं चित्रमित्यभिसन्धिकरणमेवा—"भिप्रायनिवेदनादविसंवादन"—मिति वचनात् । न च तन्निवेदनमव्यवसायस्य, अज्ञविषदर्शनस्यापि तत्प्रसंगात् । अव्यसायस्यापि दर्शनस्य व्यवसायजननात्तन्निवेदनमिति चेन्न । अव्यवसायाद् व्यवसायस्य गर्दभादश्वस्येवानुपपत्तेः । व्यवसायवासनोन्मीलनेनाव्यवसायस्यापि व्यवसायहेतुत्वं दर्शनस्येति चेन्न । तद्दर्थस्यैव तद्धेतुत्वप्रसंगेन अन्तर्गडुनो दर्शनस्याकल्पनापत्तेः । व्यवसायहेतुत्वेन चाविसंवादित्वमौपचारिकमेव दर्शनस्य स्यात् । मुख्यतः संनिपत्याभिप्रायनिवेदनेन व्यवसायस्यैव तदुपपत्तेः । न च ततस्तस्य प्रामाण्यं । संनिकर्षादावपि

१ बौद्धस्य मानसं प्रत्यक्षं व्यवसायात्मकमिति सौगतमतम् । २ स्वर्गप्रापणादि ३ सर्वं क्षणिकं सत्वादित्यादि । ४ तस्माद्दृष्टस्य भावस्य दृष्ट एवाखिलो गुणः । भ्रांतेर्निश्चीयते नेति साधनं संप्रवर्त्तते ॥ इति बौद्धैर्वस्तुनो निरंशत्वाभ्युपगमात् ५ नित्यप्रसक्तं संबद्धमित्यर्थः ६ अभिप्रायकरणमेव ७ वद्यः, दर्शनस्येत्यर्थः । ८ प्राकट्येन । ९ निरर्थकस्य । १० अव्यवधानेन । ११ अन्यथेति शेषः ।

तत्प्रसङ्गात् । ततो युक्तमविसंवादवैकल्याद्दर्शनमप्रमाणमिति । तदुक्तम् ।

विषदर्शनवत् सर्वमज्ञस्याकल्पनात्मकम् ।
दर्शनं न प्रमाणं स्यादविसंवादहानितः ॥ १ ॥ इति

प्रामाण्याभावे च दूरतः प्रत्यक्षत्वं, तस्य तद्विशेषत्वेन तदभावेऽनुपपत्तेरतः प्रत्यक्षाभासं तदिति प्रतिपत्तव्यं ।

भवतु तर्हीन्द्रियार्थयोः सन्निकर्षः प्रत्यक्षं, वस्तुसाक्षात्करणस्य सर्वत्र तत एव भावादिति चेन्न । तस्याचेतनतया वस्तुप्रमितौ साधकतमत्वानुपपत्त्या प्रामाण्यस्यैव प्रतिक्षेपात् । न च तत एव साक्षात्करणं विषयस्य, तदभावेऽपि चक्षुषा पटस्य तत्प्रतिपत्तेः । अस्त्येव चक्षुषस्तद्विषयेण सन्निकर्षः, प्रत्यक्षस्य तत्रासत्वेऽप्यनुमानतस्तदवगमात् । तच्चेदमनुमानं; चक्षुः सन्निकृष्टमर्थं प्रकाशयति बाह्येन्द्रियत्वात्त्वगादिवत् । इतिचेत्; अत्र न तावद्गोलकमेव चक्षुस्तद्विषयसन्निकर्षप्रतिज्ञानस्य प्रत्यक्षेण बाधनात्तेन तत्र तदभावस्यैव प्रतिपत्तेर्हेतोश्च तद्बाधितकर्मनिर्देशानन्तरं प्रयुक्ततया कालात्ययापदिष्टतोपनिपातात् । न तन्मात्रं चक्षुस्तद्रश्मिकलापस्य तत्त्वात्तस्य च रश्मिपरीतं चक्षुस्तैजसत्वात् प्रदीपवदित्यंतस्तैजसत्वस्यापि तैजसं चक्षुः रूपादीनां मध्ये रूपस्यैव प्रकाशकत्वात्तद्वदित्यनुमानतोऽवगमादिति चेत् । किं पुनरत्र चक्षुर्यत्र तैजसत्वं साध्यं ? न गोलकमेव तस्य रूपप्रकाशकत्वासिद्धेः; रश्मिपरिकल्पनावैफल्यप्रसंगात् । रश्मिपरिकरितमिति चेन्न, तस्याद्याप्य-

१ अव्यवसायात्मकम् । २ तस्य विषयेण सह सन्निकर्षप्रतिज्ञानस्य, चक्षुः सन्निकृष्टमर्थं प्रकाशयतीति प्रतिज्ञाया इत्यर्थः । ३ विषयकथनपश्चात् । ४ अतोऽनुमानात् । ५ तदसिद्धौ तैजसत्वासिद्धिः, तदसिद्धौ च रश्मिपरिकल्पितत्वस्यासिद्धिः । ६ चक्षुः ।

सिद्धत्वेन रूपादीनामित्यार्हेतोराश्रयासिद्धदोषात् । व्यभिचारी चायं हेतुः-स्वच्छजलेन तस्य तदन्तर्गतरूपमात्रप्रकाशत्वेऽपि तैजसत्वाभावाच्च तैजसत्वाद्रश्मिवत्वं चक्षुषः । अरश्मिवता कुतो न तेन व्यवहितस्यापि ग्रहणमप्राप्तेरविशेषात्? रश्मिवतापि कुतो न स्वसन्निकृष्टस्यांजनादेरंजनशलाकादेः प्रदीपादिनेव ग्रहणं प्राप्तेर-भेदात्? तथा स्वाभाव्यात्, इति समानमन्यत्रापि समाधानम् । ततो गोलकमेव केवलं चक्षुर्नच तस्य विषयसंनिकर्षः । इति सिद्धम् विनापि तेन तद्विषयस्य साक्षात्करणं । तथा सुखादेरपि । तद्वेदन मपि संनिकर्षजमेव वेदनत्वात् घटादिवेदनवत् । सन्निकर्षोऽपि तत्र संयुक्तसमवायो मनःसंयुक्ते आत्मनि सुखादेः समवाया-दिति चेन्न । दृष्टान्तस्य साध्यवैकल्यात्तत्र सन्निकर्षाभावस्य निरूपितत्वात् ।

अपि च यदि तद्वेदनादनर्थान्तरं सुखादिर्न तर्हि तेन मनसः संनिकर्षः, ततः पूर्वं तस्यैवाभावात् । वेदनसमये भावेऽपि व्यर्थस्तत्संनिकर्षस्तस्य वेदनार्थत्वात् । तस्य च ततः प्रागेवो-त्पत्तेः । अर्थान्तरमेव ततः सुखादिरतः प्रागपि तस्य भाव इति चेत्, स यद्यनुभवरहितस्यैव सकलतत्पूर्वसमयेऽपि भाव, इति न चन्दनदहनादेस्तस्योत्पत्तिः शक्यावक्लृप्तिः । अनुभवसहितस्यैवेति चेन्न तर्हि तस्मादिन्द्रियसंनिकृष्टादुत्पत्तिस्तद्वेदनस्य समसमय-भावित्वात् । अनुभवविरुद्धं च सुखादेस्तद्वेदनादर्थान्तरत्वं स्व-संवेदनरूपस्यैव तस्यानुभवात् । कथं तर्हि तद्वेदनस्य प्रामाण्य-

---

१ योगो वदति । २ सिद्धान्ती प्राह ॥ ३ प्रदीपाग्रकज्जलरेखादेः । ४ यथा घटादौ प्राप्तिस्तथांऽजनादावपीति प्राप्त्यभेदः । ५ उत्पादकत्वात् । ६ द्वंद्व-समासः कार्यः, चंदनात्सुखस्य दहनात्-अग्नेः दुःखस्य । ७ शक्या कल्पना । ८ अन्यः प्राह ।

मात्मवेदनमात्रस्य तदनभ्युपगमात् । " अर्थात्मवेदनं न्यायं प्राहु " रित्युक्तत्वादिति चेन्न । अनुग्रहपीडादिरूपेण तस्य तद्वेदनात्कथंचिदर्थान्तरस्यापि भावादैकान्तिकस्यैव ततस्तद्वेदस्य तथा तदनुभवाभावेन प्रत्याख्यानादित्युपपन्नमव्यापकत्वं संनिकर्षस्य । तदभावे घटादौ सुखादौ च प्रत्यक्षस्योक्तयोपपत्त्या व्यवस्थापनात् । यदि च संनिकर्षस्य प्रत्यक्षत्वं तर्हि चक्षुषा रूपवद्रसादेरपि ग्रहणप्रसंगस्तस्य तत्रेवेतरत्रापि संयुक्तसमवायेन संनिकर्षात्, तद्विशेषस्याभावात् । नो चेत्तस्यैव तर्हि प्रत्यक्षत्वं, सति तस्मिन्विषयसंवित्तेर्नियमात् । न संनिकर्षस्य विपर्ययादित्यनुपपन्नं तल्लक्षणत्वं प्रत्यक्षस्य ।

यत्पुनर्मीमांसकस्य मतं " इन्द्रियविषयसंप्रयोगादुत्पन्नं ज्ञानं प्रत्यक्षं " इति, तदपि न युक्तम् । संप्रयोगस्य संनिकर्षार्थत्वे नैयायिकवद्दोषात् । यदि चेन्द्रियसंनिकर्षात्तदवाच्छिन्न एवात्मप्रदेशे ज्ञानं; तर्हि तदपेक्षया पर्वतादेः प्रत्यासन्नत्वात्तत्र किमपेक्ष्य दूराद्विप्रतिपत्तिः । गोलकाधिष्ठानं शरीरमपेक्ष्येति चेन्न, तस्यासन्निकृष्टतया तज्ज्ञानेनाग्रहणात् । नचागृहीते तस्मिंस्ततोऽयमतिदूर इति भवति प्रतीतिः। अन्तरेणापि संनिकर्षं तस्य ग्रहणे पर्वतादेरपि स्यादिति न युक्तं तत्र तत्कल्पनं । गोलकाधिष्ठान एवात्मप्रदेशे ततस्तज्ज्ञानमिति चेत्कथमिन्द्रियाग्रवर्तिनस्तस्मात्तन्मूलगते तत्र विषयज्ञानमिन्द्रियान्तरेष्वेवमदर्शनात् । तत्राद्दष्टस्यापि चक्षुषि

१ जैनैः । २ प्रमाणम् । ३ एकांतेन नियमेन भवः तस्यैकांतिकस्य ॥ ४ इन्द्रियाणामर्थे व्यापारः, तत्प्रगुणतयाऽवस्थानं, कार्याऽत्वसेया शक्तिर्वा संप्रयोगः ५ आत्मनः सर्वगतत्वात् । ६ संनिकर्षाभावेन । ७ सन्निकर्षज्ञानेन । ८ विनेत्यर्थः । ९ विषयज्ञानं । १० अर्थज्ञानं । ११ अनुपलब्धेः । १२ अनुपलब्धस्यापि विषमज्ञानस्य ।

कल्पनायां वरमप्राप्यकारित्वमेव कल्पितमप्राप्यकारिण एव गोलकस्य प्रतीतेः ।

न च गोलकं चक्षुस्तद्रश्मिप्रसरस्य तत्त्वादिति चेत्, कथं तर्हि चक्षुरर्थस्य चिकित्साविधेर्गोलके करणमन्यार्थस्यान्यत्र तदनुपपत्तेः । चक्षुरर्थस्य पादे कथमभ्यङ्गस्य करणमिति चेन्न, पादाभ्यक्तस्य स्नेहस्य तन्नाडीरन्ध्रद्वारेण चक्षुरवाप्तस्य तदुपकारित्वात् । न चैवं गोलकाभ्यक्तस्यांजनादेस्तद्बहिर्गतरश्मिप्रसरावाप्तिस्तदनुपलंभात् । न च शक्योपलंभस्यानुपलब्धिरन्तरेणाभावं संभवति, तन्न संप्रयोगस्य संनिकर्षार्थत्वम् ।

अनुकूलार्थत्वमिति चेत्, स्यान्मतं। ग्रहणानुकूल्येनावस्थानमेव विषयविषयिणोः संप्रयोग इति तन्न, विषयानुकूल्यग्रहणं प्रत्यनुपयोगात् । अन्यथा तद्रहितस्य द्विचंद्रादेरग्रहणप्राप्तेः । असतस्तद्रहितस्यापि ग्रहणं न सत इति च विभागपरिकल्पनस्य निर्बन्धनत्वात् । तन्न संप्रयोगस्यापि प्रत्यक्षत्वं ।

भवतु व्यवसायस्यैव विषयाकारपरिणतिविशेषात्मनो बुद्धिव्यापारस्य प्रत्यक्षत्वं, प्रतिविषयाध्यवसायो दृष्टमितिवचनाद्, दृष्टमितिच प्रत्यक्षस्याभिधानादिति चेन्न। विषयाकारपरिणामे बुद्धेर्दर्पणादिवदेव तस्याः प्रामाण्यान्मूर्तत्वेनाचेतनत्वापत्तेः । अचेतनैव बुद्धिरनित्यत्वात्कलशादिवदिति चेत् । कथमिदानीं दर्पणादिवदेव तस्याः प्रामाण्यं यतस्तद्व्यापारविशेषस्य प्रत्यक्षत्वं, तस्य तद्विशेषत्वेन तदभावेऽनुपपत्तेः । चेतनसंपर्काच्चेतनैव बुद्धिरिति चेत् । कुतो न दर्पणादिरप्येवं ? चेतनस्य व्यापकत्वेन तत्संपर्कस्य तत्रापि भावात् । बुद्धावेव तद्विशेषस्य भावादिति चेत् । स कोऽपरोऽन्यत्र

१ चक्षुर्निमित्तस्य । २ अभावं विनेति भावः । ३ जैनो वदति । ४ ग्रहणयोग्यतया । ५ अर्थानिमित्तकत्वात् । ६ निःकारणत्वात् ।

तत्स्वाभाव्यादिति चेतनात्मैव बुद्धिः । न चैवं तत्र विषयाकारकल्पनमुपपन्नं मूर्त्तत्वाभावात्, मूर्त्तेषु एव दर्पणादिषु मूर्त्तमुखाद्याकारस्योपलंभादिति न तदाकारस्य व्यवसायत्वेन प्रत्यक्षत्वकल्पनमुपपत्तिमत् । कुतो वा बुद्धेरन्यस्य चेतनस्य भावे तत एव न विषयप्रतिपत्तिर्यतो बुद्धेस्तदर्थान्तरस्य कल्पनं । बुद्धिकरणकादेव ततस्तत्प्रतिपत्तिकरणकस्य तत्र तद्व्यापारस्यासंभवात्ततो बुद्ध्यध्यवसितं बुद्धिप्रतिसंक्रान्तमेव चेतनः प्रतिपद्यते, ततो युक्तमेव तत्कल्पनं साफल्यादिति चेन्न । बुद्ध्यप्रतिपत्तौ तत्प्रतिसंक्रान्तस्य विषयस्याशक्यप्रतिपत्तिकत्वाद्दर्पणाप्रतिपत्तौ तत्प्रतिसंक्रान्तमुखप्रतिपत्तेरप्रतिपत्तेः । तत्प्रतिपत्तिश्च यदि बुद्ध्यन्तरप्रतिसंक्रमद्वारेण, भवत्यनवस्थानं; तदन्तरस्यापि तदपरतत्प्रतिसंक्रमद्वारेणैव प्रतिपत्तेः । अतद्वारायां तु प्रतिपत्तौ विषयप्रतिपत्तेरपि बुद्धिप्रतिसंक्रमनिरपेक्षाया एवोपपत्तेः कथं न व्यर्थैव बुद्धिपरिकल्पना भवेत् । बुद्धेर्विषयप्रतिपत्तिवत् स्वप्रतिपत्तावपि स्वयमेव करणत्वादुपपन्नं तत्प्रतिपत्तेस्तदन्तरप्रतिसंक्रमनिरपेक्षणं । न चैवं विषयप्रतिपत्तेर्विषयस्य ग्राह्यतया कर्मत्वेन स्वप्रतिपत्तौ करणत्वानुपपत्तेरिति चेत्; कथमिदानीं बुद्धेरपि तत्प्रतिपत्तौ करणस्य कर्मत्वं यतस्तद्ग्राह्यता भवेत्, कर्मणः करणत्ववत् करणस्यापि कर्मत्वानुपपत्तेः । बुद्धावुभयधर्मोपपत्तौ विषयेऽपि स्यादविशेषात् । विषयस्य स्वप्रतिपत्तिकरणत्वे सर्वोपि विषयः सर्वस्य प्रतिपन्न एव भवेत्तत्प्रतिपत्तिकरणभावस्य सर्वत्र तत्र भावादिति चेन्न, बुद्धावप्येवं प्रसंगात् ।

१ सांख्यो वक्ति २ बुद्धिव्यापारस्य । ३ बुद्धिप्रतिबिंबितमेव विषयं । ४ जानाति । ५ प्रतीता अप्रतीता वेति विकल्पद्वयं कल्पयन्नाह । ६ कर्मत्वकरणत्वे ।

अथ या यस्य बुद्धिः सैव तस्य तत्प्रतिपत्तौ करणं नापरा तदयमदोष इति । यस्येति[1] कुतः ? कुश्चित्प्रत्यासत्तिविशेषादिति चेन्न, विषयेऽपि तुल्यत्वात् । तस्यापि हि यो यस्य प्रत्यासन्नः स एव तस्य तत्प्रतिपत्तौ करणं नापर इति वक्तुं शक्यत्वात् । सर्वोऽपि सर्वात्मानं प्रति प्रत्यासन्न एवात्मनो व्यापकत्वेन सर्वत्र तत्र भावादित्यपि समानं बुद्धिष्वपि । तन्न विषयप्रतिपत्तौ विषयवद्बुद्धेरपि करणत्वमिति[2] न तद्व्यापारस्य प्रत्यक्षत्वं, प्रागुक्तस्य सम्यग्ज्ञानस्यैव स्पष्टावभासिनस्तदुपपत्तेः ।

---

## अथ प्रत्यक्षस्य भेदद्वयवर्णनं विधीयते ।

तच्च प्रत्यक्षं द्विविधं, सांव्यवहारिकं मुख्यं चेति । सांव्यवहारिकमपि द्विविधं, इन्द्रियप्रत्यक्षमनिन्द्रियप्रत्यक्षं चेति । तत्रेन्द्रियस्य चक्षुरादेः कार्यं यद्बहिर्नीलादिसंवेदनं तदिन्द्रियप्रत्यक्षम् । कथं[3] पुनस्तस्य विषयनियमः ? कथं[4] च न स्यात् ? संवेदनात्मना नीलादिवत्तदपरनिरवशेषविषयापेक्षयाऽपि तस्य[5] तुल्यत्वादिति चेन्न, शक्तिनियमतस्तदुपपत्तेः । नियतशक्तिका हि संवित्तयः स्व[6]-हेतुसामर्थ्यादुपजायंते संसारिणामतो नियतस्यैव विषयस्य प्रतिपत्तिर्न सर्वस्य । यावन्[7]नियतशक्तिकत्वात्तत्र विषयनियमस्ता[8]वन्नियतविषयसारूप्यादेवेति[9] कुतो न भवेत् । भवंति[10] हि नीलसारूप्ये संवेदनस्य नीलस्यैवेदं संवेदनं न पीतादेरिति तन्नियम, इति चेत्, किं पुनस्तस्य तत्सारूप्यं ? न तावत्सदादिरूपं तस्यापि सर्वत्र साधारणत्वेन नियामकत्वानुपपत्तेः । नीलरूपमेव तदिति

---

१ स्याद्वादी आह । २ बुद्धेरतत्वाभ्युपगमादिति शेषः ॥ ३ सौगतः पृच्छति । ४ जैनः पृच्छति । ५ चक्षुरादिकार्यसंवेदनस्य । ६ ज्ञानावरणवीर्यांतरायकर्मक्षयोपशमसामर्थ्यात् । ७ यथा । ८ तथा । ९ विषयनियमः । १० सति ।

चेन्न। तस्य बहिरेव दर्शनान्न संवेदने, तस्यान्तरतद्रूपस्यैवोपलंभात्। प्रतिपादितश्च तस्य संवेदनबहिर्भावः पुरस्तात्। कुतो न वा नीलसंवेदनं नीलेनेव पीतादिनाऽपि सरूपं? तस्यैव तत्कारणत्वादिति चेत्, किं न चक्षुरादिनापि तस्यापि तद्धेतुत्वाविशेषात्। नीलानुकरण एव तस्य शक्तिरिति चेत्, व्यर्थमिदानीं तत्र तत्सारूप्यं, शक्तित एव नियमवत्या विषयनियमोपपत्तेः। एवं हि पारंपर्यपरिश्रमः परिहृतो भवति, शक्तिनियमात्सारूप्यनियमस्ततोऽपि विषयनियम इति। सत्यपि सारूप्ये किंवा तन्नीलं यन्नीलस्येत्युक्तं। न संवेदनगतं, तत्र भेदाभावेन व्यतिरेकविभक्तेरनुपपत्तेः। बहिर्गतमिति चेत्, तत्रापि कुतः संवेदनं? तस्य तद्विषयत्वादिति चेत्तदपि कुतः? साक्षादेव तेन तस्य ग्रहणादिति चेन्न, बहिरन्तारूपतया नीलद्वयस्याप्रतिवेदनात्। तत्सरूपत्वात्तद्विषयत्वं न साक्षादिति चेन्न, तथा तदप्रतिपत्तौ तत्सरूपत्वस्यैव दुरवबोधत्वात्। द्वयोर्हि प्रतिपत्तौ भवति तद्गतस्य सारूप्यस्य प्रतिपत्तिर्नाप्रतिपत्तौ, "द्विष्ठसारूप्यसंवित्तिर्नैकरूपप्रवेदनात्, द्वयोः स्वरूपग्रहणे सति सारूप्यवेदनम्" इति न्यायात्। ततो युक्तं शक्तिनियमादेव विषयनियमः संवेदनस्येति। तदाकारत्वेन तु तस्य तन्नियमे केशमशकादौ कुतस्तत्संवेदनस्य नियमः। नहि तत्र तदाकारत्वं, केशमशकादेरसद्रूपतया तदर्पकत्वानुपपत्तेः। अतः सकलस्याप्यसतस्तद्विषयत्वेन भवितव्यम्। अतदाकारतया विवक्षितवदितरानिरवशेषाविद्यमानापेक्षयापि तस्याविशेषात्। न वा कस्यचिदपीत्यप्रतिवे-

१ मध्ये इत्यर्थः। २ अनीलरूपस्य। ३ समानरूपं। ४ शक्तिप्रतिपादनसमर्थे॥

दनमेवासद्रूपस्येति न प्रत्यक्षलक्षणे तद्व्यवच्छेदार्थमभ्रांतग्रहणमुपपन्नम् । स्वयमेवासति तद्वेदने व्यवच्छेदनस्य किंशुके रागार्पणवदनुपपत्तेः । कथं पुनरसतः केशादेराकारार्पणवद्विषयत्वमपीति चेत्, स्यादयं प्रसंगो यदि तस्य स्वशक्तितो विषयत्वं । न चैवं । वेदनसामर्थ्यादेव तद्भावात्तादृशं तत्सामर्थ्यमस्यांतरादृष्टविशेषाद्बाह्यादपि गरलास्वादकामलादेरिति प्रतिपत्तव्यमनुमंतव्यं चेदमित्थम् । अन्यथा क्वचित्कस्यचिदपि व्यामोहस्यानुपपत्त्या तद्व्यवच्छेदार्थस्य शास्त्रस्य वैफल्योपनिपातात् । असदर्थप्रतिवेदनादपरस्य च व्यामोहस्यानुपपत्तेः । ततः स्थितं स्वशक्तितो विषयनियमः संवेदनस्य तत्त्वादसद्विषयनियमवदिति । न कस्याप्यसतः संवेदनं केशादेरपि देशांतरादौ सत एव कामलिना प्रतिवेदनादिति केचित् । तन्न । तद्वेदनस्य यथावस्थिततत्केशादिविषयत्वे विभ्रमत्वाभावापत्तेः । अतद्देशादित्वेन ग्रहणाद्विभ्रमत्वमिति चेत् न, अतद्देशत्वादेस्तत्रासत्वात् । असतोपि तस्य ग्रहणे केशादेरेव किं न स्यात्, यतस्तत्प्रतिपत्तिरसत्ख्यातिरेव न भवेत् । अर्थविषयैव तद्वित्तिस्तदर्थस्य त्वलौकिकत्वात्तत्र विभ्रमाभिमानो लोकस्येति मतं यस्य तस्यापि किमिदं तदर्थस्यालौकिकत्वं ? समानदेशकालैरप्यन्यैस्तद्दर्शननिमित्ताभावेनादृश्यत्वमिति चेत्, किं पुनस्तन्निमित्तं यदभावात्तस्यादृश्यत्वं । काचादिरेव कारणदोष इति चेत्, व्याहत-

१ " प्रामाण्यं व्यवहारेण शास्त्रं मोहनिवर्त्तनमिति वाक्यात् । २ संख्यातिरसत्ख्यातिः प्रसिद्धार्थख्यातिरात्मख्यातिर्विपरीतार्थख्यातिः स्मृतिप्रमोष इत्येवंरूपस्यापरस्येति भावः । ३ भवतीति शेषः । ४ पुंसा । ५ सांख्याः । ६ यथार्थस्थित । ७ तथा च न कस्याप्यसतः संवेदनमित्यादि न स्यात् । ८ परः प्राह । ९ पुंभिः । १० केशादिदर्शन । ११ विषयस्य । १२ केशादेः ।

मिदं वस्तुसद्विषयवेदनहेतोर्दोषत्वमिति चक्षुरादेरपि तत्त्वापत्तेः। न चासावदोष[2] एव तच्चिकित्सायामनर्थत्वप्रसंगात् । अलौकिकत्वं लोके तस्याविद्यमानत्वं, तदपि तत्प्रयोजनानिष्पादना[3]दिति चेत्, असद्विषयैव तर्हि तत्प्रतीतिरिति स्पष्टमभिधातव्यं, किं[4]मलौकिकार्थख्यातिरित्यभिधीयते। स्मृतिरेवेयं प्रागनुभूतस्यैव केशादेः काचादिमतोऽपि प्रतिवेदनान्नासतोऽतिप्रसंगादित्यपि कस्यचिद्वचनमसमीचीनमेव, स्मृतित्वे पुरोवर्त्तितया तस्याप्रतिवेदनप्रसंगात् । प्रमोषवशात्तथा तत्प्रतिवेदनमिति चेत्, कः पुनरयं प्रमोषो नाम ? स्वरूपात्प्रच्युतिरिति चेन्न तर्हि स्मृतिरिति कथं तया केशादेः प्रतिवेदनं ।

स्वरूपात्प्रच्युताप्यस्ति स्मृतिर्यदि मतं तव ।
सुप्तो न किं प्रबुद्धोऽस्तु जीवितो[6]ऽस्तु मृतो न किम् ॥

अथ [7]स्वविषयस्य पुरोवर्त्तितया [8]ग्राहकत्वमेव [9]कुतश्चित्तस्याः प्रमोषः। तन्न। [10]पुरोभावस्यासत्वे ग्रहणानुपपत्तेः, [11]अन्यथा केशादेरेवासतस्तत्संभवादसत्ख्यातिरेव संभवेन्न स्मृतिप्रमोषः। ततः स्थितं यथा स्वहेतुसामर्थ्यादेवासदवभासिन इन्द्रियज्ञानस्य विषयनियमस्तथा सदवभासिनोऽपि। तन्न सारूप्यात्तत्कल्पनमुपपन्नं। इति निरूपितमिन्द्रियप्रत्यक्षम्।

१ वस्तुसाद्विषयवेदनहेतुत्वाविशेषात् । २ गुणः । ३ तेन केशादिना प्रयोजनस्यार्थक्रियालक्षणस्यानिःपादनात् ४ किमर्थमित्यर्थः । ५ पुंसा ६ सुप्तश्चेत्प्रबुद्धस्तर्हि तस्य स्मरणेन भवितव्यं तच्च तस्य नास्तीति कथं तस्य तत्त्वमिति कस्यचित्प्रश्नस्यापि स्वरूपात्प्रच्युता स्मृतिरस्तीत्युत्तरं वाच्यं। एवमग्रस्थे चतुर्थांशेऽपि। ७ अतद्देशत्वेनानुभूतस्य। ८ ग्रहणमेव ९ कारणादिति शेषः १० पुरोविद्यमानत्वस्य। ११ पुरोभावस्यासत्वेऽपि तद्ग्रहणात्।

## अधुना अनिंद्रियप्रत्यक्षस्वरूपकथनार्थमाह ।

किं पुनरनिंद्रियप्रत्यक्षमिति चेत्,सुखादेः स्मरणादिज्ञानस्य च स्वरूपवेदनमेवं तत्र स्पष्टावभासितया प्रत्यक्षव्यपदेशोपपत्तेः । अनिंद्रियं चेह न पौद्गलिकं मनः प्रतिपत्तव्यं, तदायत्तजन्मत्वे सुखादिस्मरणादीनां काकादिष्वमनस्केषु तदभावानुषंगात् । न च तत्र न संत्येव तानि, स्मरणप्रत्यभिज्ञानादिनिबंधनतया स्वदेहोपलब्धस्य प्रवृत्त्यादेस्तत्रापि प्रतिपत्तेरतः क्षयोपशमविशेषालिंगितः कश्चिदात्मप्रदेश एवानिंद्रियं, तत्प्राधान्येन सुखाद्युत्पत्तेः काकादिष्वप्युपपत्तेरत एव गुरुभिरनंतवीर्यदेवैरपि तस्यैवानिंद्रियत्वमभ्यनुज्ञातम् ।

किं पुनरेवं द्रव्यमनसः परिकल्पनेनेति चेत्, द्रव्येन्द्रियस्य चक्षुरादेरपि किं ? न किंचित्, अत एव तद्व्यापाराभावेऽपि सत्य स्वप्नादावन्तरंगाद्विशुद्धिविशेषादेव रूपादिदर्शनं । तर्हिंद्रियस्य तु जाग्रद्दशाभाविनि तद्दर्शने तद्धेतोर्विशुद्धिविशेषस्य तदधिकरणजीवप्रदेशाधिष्ठानत्वेन निमित्तमात्रत्वादेवं कल्पनमत एव गवाक्षस्थानीयतां तत्र व्यावर्णयंति तत्त्ववेदिन इति चेत्, तर्हि द्रव्यमनसोऽपि परिकल्पनं क्वचित्सकलेंद्रियस्य सुखादिवेदने तदवष्टब्धजीवप्रदेशाश्रयविशुद्धिविशेषनिबंधने निमित्ततयैव । न च निमित्तेन सर्वदा तत्कार्ये भवितव्यमिति नियमो गवाक्षादिना व्यभिचारात् । कुतः पुनः शक्तिविशेषस्य क्षयोपशमात्मनोऽवगमो यतस्तत्प्रभवत्वमिंद्रियादिप्रत्यक्षस्येति चेत्, तत एव प्रत्यक्षात् । न तावत्तदहेतुकं कादाचित्कत्वात् । नापि द्रव्येंद्रिय-

१ अष्टदलकमलाकारं । २ क्षयोपशमविशेषालिंगितात्मप्रदेशस्यानिंद्रियत्वे । ३ पंचेंद्रियस्य । ४ जीवस्येति । ५ जीवस्येति । ६ विवक्षित इति शेषः ।

मात्रात्तद्भावेऽपि क्वचिदुत्पत्तेः, कदाचित्तद्भावेऽप्यनुत्पत्तेः। तादृशं च तदात्मनि कारणान्तरस्य प्राधान्यमावेदयति। तत्र यथोक्तशक्तिविशेष एवेत्युपपन्नमिंद्रियादिप्रत्यक्षस्य तत्प्रभवत्वमिति।

कुतः पुनस्तदुभयस्यापि मुख्यमेव प्रत्यक्षत्वं न भवतीति चेत्, वैशद्यसाकल्यस्य तन्निबंधनस्य तत्राभावात्। व्यावहारिकत्वं तु तत्र तस्य वैशद्ये लेशोपाश्रयेण लोकस्य प्रत्यक्षव्यवहारप्रसिद्धेः। तत्पुनरुभयमपि प्रत्यक्षं प्रत्येकमवग्रहेहाऽऽवायधारणाविकल्पाच्चतुर्विधं। तत्र विषयविषयिसंन्निपातानंतरभाविसत्तालोचनपुरःसरो मनुष्यत्वाद्यवांतरसामान्याध्यवसायिप्रत्ययोऽवग्रहः। तदवगृहीतविशेषस्य देवदत्तेन भवितव्यमिति भवितव्यतामुल्लिखंती प्रतीतिरीहा। तद्विषयस्य देवदत्त एवायमित्यवधारणावानध्यवसायोऽवायः। तस्यैव कालांतरस्मरणयोग्यतया ग्रहणं धारणा। तदेतेषामवग्रहादिविकल्पानां पूर्वपूर्वस्य प्रमाणत्वमुत्तरोत्तरस्य च तत्फलत्वं प्रतिपत्तव्यम्। स्वार्थव्यवसायस्याव्युत्पत्त्याविव्यवच्छेदात्मनस्तद्गतस्यापि कथंचित्पूर्वपूर्वस्मादुत्पत्तेः। विषयभेदानिबंधनश्चावग्रहादीनामस्ति संख्याविकल्पः सोन्यत्र प्रतिपत्तव्य। इति व्याख्यातं व्यवहारिकमिंद्रियप्रत्यक्षमनिंद्रियप्रत्यक्षं च।

## अधुना मुख्यप्रत्यक्षस्वरूपप्रतिपादनायाह।

मुख्यं तु प्रत्यक्षमतींद्रियप्रत्यक्षं। तद् द्विविधं, सकलं विकलं चेति। विकलमपि द्विविधमवधिर्मनःपर्ययश्चेति। तत्रावधिर्ना-

१ द्रव्येंद्रियाभावेपि। २ सत्यस्वप्नादौ। ३ अन्यवस्तुगतचित्तकाले। ४ द्रव्येंद्रियभावाभावाभ्यामुत्पत्यनुत्पत्तिविकलं। ५ इंद्रियानिंद्रियप्रत्यक्षभेदात्। ६ योग्यदेशावस्थान। ७ दर्शन। ८ अवायविषयस्यैव॥

मावधिज्ञानावरणवीर्यांतरायक्षयोपशमविशेषापेक्षया प्रादुर्भावो रूपाधिकरणभावगोचरो विषदावभासी प्रत्ययविशेषः । सच त्रिविधः, देशावधिपरमावधिसर्वावधिविकल्पात् । तत्र देशावधे- र्मतिज्ञानविषयस्यासर्वपर्यायद्रव्यलक्षणस्यानंतैकभागः, तदनं- तैकभागःपरमावधेः, तदनंतैकभागश्च सर्वावधेर्विषयः प्रतिपत्तव्यः। विशुद्ध्यतिशयश्च पूर्वस्मादुत्तरोतरस्येति ।

तथा मनःपर्ययोऽपि संयमैकार्थसमवायी तदावरणवीर्या- न्तरायक्षयोपशमविशेषनिबन्धनः परमनोगतार्थसाक्षात्कारी प्रत्ययः । सोऽपि द्वेधा,ऋजुमतिर्विपुलमतिश्चेति । तत्र प्रगुणमनो- वाक्कायैर्निर्वर्तितोऽर्थः पूर्वस्य, प्रगुणैरितरैर्वा मनोवाक्कायैर्निर्वर्तितो ऽनिर्वर्तितश्चार्थः पश्चिमस्य विषयः । सूक्ष्मतया तु सर्वावधि- विषयानंतैकभागे पूर्वस्य तदनंतैकभागे परस्य निबंधः। तथा विशु- द्ध्यतिशयविशेषवत्त्वादप्रतिपातित्वाच्च पूर्वस्मादुत्तरस्य विशेषो वेदितव्य। इति व्याख्यातं विकलमतींद्रियप्रत्यक्षम् ।

सकलं तु तत्प्रत्यक्षं प्रक्षीणाशेषघातिमलसमुन्मीलितं सकल- वस्तुयाथात्म्यवेदिनिरतिशयवैशद्यालंकृतं केवलज्ञानं । तद्वतः पुरुषस्य सद्भावे किं प्रमाणमिति चेत् । इदमनुमानं—अस्ति सर्वज्ञो निर्बाधप्रत्ययविषयत्वात् सुखादिनीलादिवत् । न च तत्प्रत्यये विवादस्तन्निषेधवादिनोऽपि तद्भावादन्यथा तन्निषेध- स्यैव तद्विषयपरिज्ञानाभावेनासंभवप्रसंगात् । निर्बाधत्वमपि तस्य प्रत्यक्षादीनामन्यतमस्यापि तद्बाधकत्वासंभवात्। तद्बाध- कत्वं नाम तद्विषयासत्वनिवेदनमेव। तच्च प्रत्यक्षेण यदि क्वचित्

१ पदार्थः २ असर्वपर्यायं द्रव्यं लक्षणं यस्येति समासो विधेयः ३ सूक्ष्मरूप- तया । ४ भवतीति शेषः । ५ आत्मलक्षणार्थे । ६ ऋजु । ७ परेषां । ८ निष्पन्नः ९ वक्रैः । १० प्रवृत्तिः । ११ प्रादुर्भूतम् ।

कदाचित्किंचिदनिष्टमभ्युपगमात् । सर्वत्र सदापीति चेन्न, तस्य सर्वविषयत्वप्रसंगात् । अन्यथा तत्र तेन तन्निवेदनानुपपत्तेः । भूतलमवलोकयतैव तेन तत्र घटाद्यसत्ववेदनस्य प्रतीतेः । प्रत्यक्षाभावे च तत्पूर्वकत्वेनानुमानस्याप्यसंभवात, न तस्यापि तद्बाधकत्वं । यदपि विवादापन्नः सर्वोपि देशादिः सर्वज्ञविकलो देशादित्वात् प्रसिद्धदेशादिवदिति, तदपि न साधु । देशादेः सर्वस्याप्रतिपत्तौ हेतोराश्रयस्वरूपासिद्धदोषोपनिपातात्; प्रतिपत्तौ च तत्प्रतिपत्तिमतः सर्वज्ञत्वापत्त्या सर्वज्ञनिराकरणानुपपत्तेः । यदपीदं–विवादापन्नः सर्वज्ञो न भवति पुरुषत्ववक्तृत्वादे रथ्यापुरुषवदित्यनुमानं तदपि न तस्य बाधकं । पुरुषत्वादेर्हेत्वाभासतया निरूपयिष्यमाणत्वेन तदुद्भावितस्य तस्याप्यनुमानाभासत्वेनैवावस्थितेः । नाप्यर्थापत्तिस्तदुत्थापकस्य सर्वज्ञाभावमंतरेणानुपपन्नस्य कस्यचिदर्थस्यानध्यवसायात् । नाप्यहमिव सर्वे पुरुषाः प्रतिनियतमर्थमिंद्रियैः पश्यंतीत्युपपन्नमुपमानमपि, सर्वपुरुषाणां कुतश्चिद्विषयीकरणे स्वसर्ववेदित्वापत्तेरविषयीकरणे त्वस्मृतिविषयत्वेनोपमेयत्वानुपपत्तेः । स्मरणविषयत्वेन हि तेषां स्वसादृश्यविशिष्टतयोपमेयत्वं ।

तस्माद्यत्स्मर्यते तत्स्यात्सादृश्येन विशेषितम् ।
प्रमेयमुपमानस्य सादृश्यं वा तदन्वितम् ॥ इति वचनात् ॥

शाब्दं प्रमाणं सकलदर्शिनः सत्ताविषयमेव " हिरण्यगर्भ

---

१ पुंसा । २ उच्यते इति शेषः । ३ अर्थापत्तिलक्ष्मादः—प्रमाणषट्‌विज्ञातो यत्रार्थो नान्यथा भवेत् । अदृष्टं कल्पयेदेनं सार्थापत्तिरुदाहृता । ४ उपमानलक्षणमदः—दृश्यमानाद्यदन्यत्र विज्ञानमुपजायते । सादृश्योपाधि तत्त्वज्ञैरुपमानमिहोच्यते । ५ विषयं । ६ शाब्दलक्षणं यथा—शब्दाद्यदुदितं ज्ञानमप्रत्यक्षेऽपि वस्तुनि । शाब्दं तदिति मन्यंते प्रमाणांतरवादिनः ।

प्रकृत्य सर्वज्ञ इत्यादेस्तस्यैव श्रवणात् । न च प्रत्यक्षादेरभावविषयत्वं भावप्रमाणकल्पनावैफल्यप्रसंगात् । भवत्वभावादेव प्रमाणात्सर्वज्ञस्याभावप्रतीतिः, स च तद्विषयप्रत्यक्षादिनिवृत्तिरूपोऽनुपलंभ इति चेन्न, तस्यात्मसंबंधिनः परचेतोवृत्तिविशेषैर्व्यभिचारात्, विद्यमानेष्वपि तेषु तस्य भावात् । तद्विद्यमानतायाश्च पश्चात्कुतश्चित्कार्यविशेषतोऽध्यवसायात् । सर्वसंबंधिनश्चासिद्धेः सर्वज्ञस्याभावासिद्धौ तस्य स्वयं सर्वज्ञान्तरेणाप्युपलम्भसंभवात् । अभावसिद्धौ तस्य सिद्धयत्येव सर्वसंबंधी तदनुपलंभ इति चेत्, न । सिद्धास्ततः तदभावसिद्धिस्ततश्च तत्सिद्धिरिति परस्पराश्रयोपनिपातात् । अन्यवस्तुनि विज्ञानं तर्हि तदिति चेत्, किं तदन्यद्वस्तु ? नियतो देशादिश्चेत्, न । ततस्तत्र तदभावेस्यप्रत्वात् । सर्व इति चेन्न तज्ज्ञानवतः सर्वज्ञत्वप्रसंगात् । अतो न कुतश्चिदप्यभाववेदनं सकलवेदिन इति सिद्धं तस्य निर्बाधप्रत्ययविषयत्वं । नापि हेतोराश्रयासिद्धत्वमतः प्रागपि सकलज्ञप्रतीतेः प्रतिपादितत्वात् । यद्येवं किमनेनेति चेन्नातस्तत्सत्त्वव्यवस्थापनात् । प्राक्तन्या तु तत्प्रतीत्या नित्यानित्यत्वविकल्पसाधारणस्य शब्दस्येव सदसत्त्वविकल्पसाधारणस्यैव तस्योपदर्शनात् । न चाश्रयबलाद्धेतोर्गमकत्वं यतस्तद्रहितत्वं तस्य दोषः स्यादपित्वन्यथानुपपत्तिसामर्थ्यात् । तच्चानाश्रयत्वेऽपि, निवेदयिष्यते चैतत् ।

---

१ प्रत्यक्षादेरनुत्पत्तिः प्रमाणाभाव इष्यते । सात्मनो परिणामोवा विज्ञानं वाऽन्यवस्तुनि ॥ १ ॥ प्रमाणपंचकं यत्र वस्तुरूपे न जायते वस्तुसत्त्वावबोधार्थं तत्राभावप्रमाणता ॥ २ ॥ २ नास्ति सर्वज्ञोऽस्मत्प्रत्यक्षादिप्रमाणैरनुपलभ्यमानत्वात् ३ प्राभाकरमते सर्वज्ञबाधकप्रमाणाभावं प्रतिपाद्य, भाट्टमतमिदानीमाह । ४ प्रत्यक्षाद्यनुपलम्भस्य । ५ अस्मादनुमानात् । ६ पूर्वस्मिन् जातया । ७ धर्मसाधनाख्यहेतुस्वरूपनिरूपणावसरे ।

भवतु कश्चित्सर्वज्ञः, सतु भगवानर्हन्नेवेति कुतः ? सुगतादे-रपि तत्त्वेन प्रसिद्धेरिति चेत्, उच्यते। भगवानर्हन्नेव सर्वज्ञः सर्वज्ञत्वान्यथानुपपत्तेः । तथाहि–सुगतस्य तावन्निर्विकल्पकं वेदनं, न तेन सुषुप्तादिवेदनवद्वस्तुपरिच्छित्तिः । सत्यामपि तस्यां न सर्वविषयत्वं कारणस्यैव विषयत्वोपगमात् । न च कारणमेव सर्वं तस्य समसमयस्योत्तरसमयस्य चाकारण त्वात् । अन्यथा " प्रागभावः सर्वहेतुना " मित्यस्य व्याप्तेः । न चैकस्वभावत्वे ततो नानार्थपरिच्छित्तिर्नित्यादप्येकस्वभावादेव हेतोर्देशादिभेदभिन्नानेकवस्तुप्रादुर्भावोपनिपातेन तन्निषेधाभाव-प्रसंगात् । प्रतिव्यक्तितदाभिमुख्याभावे पृथगर्थदेशनानुपपत्तेश्च । भवत्वेकमनेकस्वभावमेव तद्वेदनं युगपन्नानाकारतया स्वतस्तस्य संवेदनादिति चेन्न । क्रमेणापि तद्रूपतया तस्य तत एव प्रतिपत्तिसंभवात् । तादृशसंवेदनात्मा भगवानर्हन्नेव न सुगत-स्तस्य तद्विलक्षणतया तद्वादिभिरभ्यनुज्ञानात् । तन्न सुगतस्य सर्वज्ञत्वं, नापि हरिहरादीनामन्यतमस्य । तद्वेदनस्यापि सकल-विषयस्य प्रत्यर्थमाभिमुख्याभावे सतीदंतयेदंतया वस्तुपरिच्छि-त्तेरनुपपत्त्या तथा तद्देशनाभावप्रसंगात् । प्रतिव्यक्त्यभिमुखतया तस्य मेचकत्वे च क्रमेणापि तद्रूप्योपपत्त्या पूर्ववदर्हत एव तादृश एवात्मनः सर्वज्ञत्वोपपत्तेः । नेश्वरादेस्तस्य तद्रूपतया परैरनभ्युपगमात् । ततो नैकस्याप्येकांतवादिनः सर्ववेदित्व-मित्युपपन्नमर्हत एव भगवतस्तद्वेदित्वं, तत्रैव स्याद्वादन्यायनायके जगदुदरविवरवर्त्तिनिरवशेषपदार्थसार्थसाक्षात्करणदक्षस्याक्षूण-स्याध्यक्षस्य तस्योपपत्तेरितरत्र विपर्यासादिति ! ! !

१ नाकारणं विषय इति । २ विरोधात् ॥ ३ सुगतः । ४ प्रतीतेः । ५ क्रमयौ-गपद्याभ्यामनेकरूपसंवेदनात्मा । ६ पूर्णस्य ।

मुख्यसंव्यवहाराभ्यां प्रत्यक्षं यन्निरूपितम् ।
देवैस्तस्यात्र संक्षेपान्निर्णयो वर्णितो मया ॥
इति श्रीमद्वादिराजसूरिप्रणीते प्रमाणनिर्णये प्रत्यक्षनिर्णयः ॥

## संप्रति परोक्षस्य प्रमाणस्य निर्णयः ।



तच्च तस्य परोक्षत्वं न सामान्यविषयत्वं, सामान्यस्य निर्विशेषस्य क्वचिदप्यनवलोकनात् । सविशेषे तु तद्विषयत्वं तु प्रत्यक्षत्वेऽपि । नापि ध्यामलाकारत्वं प्रमाणस्य निराकारस्यैव प्रतिपत्तेः । अत एव तदाकारतया तत उत्पत्तिरपि मिथ्याज्ञान एव च तदा तदुत्पत्तिरपि संभवेन्न प्रमाणे । तस्मादंतरंगमलविश्लेषविशेषोदयनिबंधनः कश्चिदस्पष्टत्वापरनामा स्वानुभववेद्यः प्रतिभासविशेष एव तस्य परोक्षत्वं । तच्च द्विविधमनुमानमागमश्चेति । अनुमानमपि द्विविधं, गौणमुख्यविकल्पात् । तत्र गौणमनुमानं त्रिविधं, स्मरणं प्रत्यभिज्ञा तर्कश्चेति । तस्य चानुमानत्वं यथापूर्वमुत्तरोत्तरहेतुतयाऽनुमाननिबंधनत्वात् । तत्र किमिदं स्मरणं नाम? तदित्यतीतावभासी प्रत्यय इति चेत्, न तर्हि तस्य प्रत्यक्षपूर्वकत्वं तदवगृहीतविषयत्वे सत्येव तदुत्पत्तेः । नचातीतस्य तदवगृहीतत्वमिति चेत्सत्यमेत एव तस्यापूर्वार्थत्वोपपादनात् । तत्पूर्वकत्वं तु तस्य नीलधवलादिना तद्विषयस्यैव तेनापि ग्रहणात् । एवमपि कथं तस्य प्रामाण्यं? अविसंवादनस्य विषय-

---

१ यतः विशेषपदार्थसहितसामान्यविषयत्वं भवति । २ अस्पष्टविषयाकारत्वं । ३ विषयाकारतया । ४ विषयात् । ५ न केवलं प्रतिपत्तिरेव । ६ मुख्यानुमाननिबंधनत्वात् ७ तेषु स्मरणादिषु । ८ सौगतः पृच्छति । ९ सौगतो वदति । १० ज्ञातविषयत्वे । ११ प्रत्यक्षानवगृहीतविषयत्वादेव १२ नीलधवलादिस्वरूपेणाऽपि ।

प्राप्तिलक्षणस्य तत्राभावात्, सोऽपि प्राप्तिकाले तस्यासंनिपातादिति चेत्, प्रत्यक्षस्यापि कथं ? तद्विषयस्यापि तत्काले संनिपाताभावात् । भावे स्मरणविषयस्यापि स्यात् । निक्षेपादेस्तद्विषयस्यापि प्राप्तिप्रतीतेः। ततो युक्तमविसंवादात्तस्य प्रामाण्यम् । तथा प्रत्यभिज्ञानस्य, तस्यापि पूर्वापरप्रत्ययाप्रतीतोभेदसा[2]दृश्यादिविषयत्वेनापूर्वार्थत्वादविसंवादाच्च । [3]प्रत्यभिज्ञानमेव नास्ति, सोऽ[4]यमित्ययमिव स इत्यादौ स इत्ययमित्यनयोः स्मरणप्रत्यक्षाकारतयाभिन्नप्रतिभासत्वेन परस्परतोऽर्थांतरत्वादन्यस्य च तदाकारस्याप्रतिवेदनात् कथं तत्र प्रामाण्यपरिचिंतनम्, इति चेन्न तर्हि स इति स्मरणमपि, सकारानुविद्धादकारानुविद्धस्य संवेदनस्यान्यत्वात् । अन्यथा तदुभयानुविद्धतया प्रतिभासभेदस्याभावप्रसंगादक्षणिकत्वा[5]पत्तेश्च । एवमयमित्यत्रा[6]ऽपि प्रतिपत्तव्यं । तथा च कुतो वस्तुप्रतिपत्तिरयमिति प्रत्यक्षस्याव्यवस्थितौ तत्पूर्वकत्वेनानुमानस्याप्यसंभवात् । अथाऽयमित्यकारादिवर्णभेदेऽपि तदनुविद्धमेकमेव संवेदनं तथैव तस्य निर्बाधमनुभवात्, तर्हि सिद्धः स एवाऽयमित्यादिरपि प्रत्यय एक एव तथा तस्यापि निर्बाधावबोधगोचरत्वात् । अन्यथा समारोपस्यापि तद्रूपस्याभावान्न तद्व्यवच्छेदार्थमनुमानमात्मदर्शनस्य तल्लक्षणस्याभावान्न तन्निबंधनः संसारोऽपीति न तत्प्रहाणाय मुमुक्षूणां चेष्टितमुपपद्यते । [7]भवतु स एवायमिति ज्ञानं प्रत्यभिज्ञानमयमिव स इत्यस्माद्विसदृशः स इति तु ज्ञानं न प्रत्यभिज्ञानं तस्योपमानत्वादिति चेत्, तर्हि

---

१ एकत्वप्रत्यभिज्ञानस्य । २ सादृश्यप्रत्यभिज्ञानस्य । ३ बौद्धो वदति । ४ सोऽयमित्याकारवेदनस्य । ५ क्रमोच्चारितानेकवर्णानुविद्धतया भिन्नप्रतिभासात्मनो ज्ञानस्यैकत्वाभ्युपगमे तस्यैकस्यानेकाक्षरव्यापित्वस्यावश्यंभावादक्षणिकत्वापत्तिरित्यर्थः । ६ प्रत्यक्षेऽपि । ७ मीमांसकः प्राह ।

तदस्मादुन्नतमवनतं स्थूलमल्पं ह्रस्वं दीर्घमित्यादिज्ञानानामुपमानत्वस्याभावात् कथं न प्रमाणांतरत्वं ? प्रतिपन्नस्यैवापेक्षोपनीतेनोन्नतत्वादिना परिवृत्त्य परिज्ञानेन प्रत्यभिज्ञानत्वस्यैव तत्रोपपत्तिरिति चेत्, सिद्धमुपमानस्यापि प्रत्यभिज्ञानत्वं, तेनाऽपि तथा तस्य तादृशेनैव सादृश्याविना परिज्ञानात् । भवतु तर्हि गौरिव गवय इत्यागमाहितसंस्कारस्यैं पुनर्गवयदर्शने सोऽयं गवयशब्दस्यार्थ इति शब्दतदर्थसंबंधपरिज्ञानमुपमानमिति चेत् न, तत्राऽपि सामान्यतः प्रागागमावगतस्यैव पुनः सन्निहितविशेषविशिष्टतया परिज्ञानतः प्रत्यभिज्ञानत्वस्यैवोपपत्तेः । अन्यथा षड्भिः चरणैश्चंचरीकः, क्षीरनीरविवेचनचतुरचंचुर्विहंगमो हंसः, एकविषाणो मृगः खड्गीतिवचनोपजनितवासनस्य पुनस्तद्दर्शने सोऽयं चंचरीकादिशब्दस्यार्थ इति वाच्यवाचकसंबंधपरिज्ञानस्याप्युपमानवदप्रत्यभिज्ञानत्वे प्रमाणांतरस्य प्रमाणचतुष्टयनियमव्याघातविधायिनः प्रसंगात् । तन्न प्रत्यभिज्ञानादन्यदुपमानमित्युपपन्नं प्रत्यभिज्ञानतयैव तस्यापि प्रामाण्यम् ॥

तर्कश्चेत्थमेव संभवति नानित्थमिति व्याप्तिपरिज्ञानात्मा, प्रमाणं, विना तेन लिंगसाध्याविनाभावस्य दुरवबोधत्वात् । न हि प्रत्यक्षतस्तस्यावबोधस्तेन संनिहितविषयबलभाविना देशकालानवच्छेदेन तस्यानवगमात् । तदवच्छेदेनावगतात्तु ततो नानु-

१ परिज्ञातवस्तुनः । २ नैयायिको वदति । ३ पुंस इति शेषः । ४ वस्तुनः । ५ प्रत्यक्षानुमानोपमानागमभेदात् । ६ सादृश्याभावेनोपमानेऽप्यंतर्भावाभावात्, प्रसिद्धसाधर्म्यात्साध्यसाधनमुपमानमिति स्वयमेवाभिधानात् । ७ अवलंबनसामर्थ्यात्, संबद्धं वर्त्तमानं च चक्षुरादिना गृह्यत इति वचनात् । ८ अनियमेन ।

मानमन्यत्राऽन्यदा तदभावेऽपि तद्भावशंकनस्यानिवृत्तेः। प्रत्यक्षपृष्ठभाविनो विकल्पात् तर्हि तथा तस्यावगमः। प्रत्यक्षं पौनःपुन्येन साधनस्य साध्यान्वयव्यतिरेकानुविधानमन्वीक्षमाणं सर्वत्र सर्वदाप्येतदेतेन विना न भवतीतिविकल्पकं ज्ञानमुपजनयति इति चेन्न; तेनाप्यप्रमाणेन तदवगमानुपपत्तेः। प्रमाणत्वमपि न तस्य प्रत्यक्षत्वेन विचारकत्वात्तद्वतः सर्वदर्शित्वापत्तेश्च। नाप्यनुमानत्वेनानवस्थापत्तेः। तदनुमानलिंगाविनाभावस्याप्यन्यस्मादनुमानादवगम इत्यपरापरस्यानुमानस्यापेक्षणात्। तस्मात्प्रत्यक्षानुमानाभ्यामन्यतयैवायं विकल्पः प्रमाणयितव्य, इत्युपपन्नं तस्यापि तर्काभिधानस्य प्रामाण्यम्, अन्यथा लिंगसाध्याविनाभावनियमस्य ततोऽनवगमप्रसंगात्। ततो युक्तं स्मृत्यादेरौपचारिकस्यानुमानस्य प्रामाण्यम्। एवं मुख्यस्यापि। किं तदिति चेत्, साधनात्साध्ये विज्ञानमेव। साधनं साध्याविनाभावनियमलक्षणं तस्मान्निश्चयपथप्राप्तात्साध्यस्य साधयितुं शक्यस्याप्रसिद्धस्य यद्विज्ञानं तदनुमानं। किं तेन? प्रत्यक्षत एव पृथिव्यादितत्त्वस्य प्रतिपत्तेरिति चेन्न, ततोऽप्यनिश्चितप्रामाण्यात्तदनुपपत्तेः। नच प्रतीतिमात्रात्तन्निश्चयो मिथ्याप्रतिभासेष्वपि तद्भावात्। अविसंवादात्तन्निश्चयस्तस्याभ्यस्तविषयवेदनेषु प्रामाण्यव्याप्ततया प्रतिपत्तेरिति चेत्, आगतमनुमानं; निश्चितव्याप्तिकादर्थादर्थांतरप्राप्तेरेवानुमानत्वात्। अनुमानमभ्यनुज्ञायत एव परप्रसिद्ध्येति चेत्, कुतो न स्वप्रसिद्ध्या? वस्तु-

---

१ सौगतः। २ विकल्पज्ञानेन। ३ स्वयं। ४ पुरुषस्य। ५ त्रैलोक्यत्रैकाल्यवर्त्यस्मदादिप्रत्यक्षागोचरे सकलसाध्यसाधनव्यक्तिसाक्षात्करणवदशेषातींद्रियार्थसाक्षात्करणोपपत्तेरिति भावः। ६ तर्कत्वेन प्रामाण्याभावे। ७ प्रामाण्यमिति शेषः। ८ अबाधितस्येति भावः। ९ प्रतिवादिनं प्रति असिद्धस्य। १० चार्वाको वदति। ११ कुत इति शेषः।

तस्तस्याप्रामाण्यादिति चेत्, न तर्हि ततः प्रत्यक्षप्रामाण्यनिर्णयोऽप्रमाणात्तदनुपपत्तेः । अन्यथा पृथिव्यादेरपि तत एव प्रतिपत्त्या प्रत्यक्षप्रामाण्यकल्पनस्यापि वैफल्योपनिपातात् । कुतो वा तस्याप्रामाण्यं ? संभवद्व्यभिचारित्वाल्लिंगस्य, व्यभिचरति हि लिंगं भूयः क्वचिन्नियमवत्वेनोपलब्धस्या[4]प्यन्यत्राऽन्यदा च तद्वैपरीत्येन[3] प्रतिपत्तेरिति चेत्, कुतः पुनर्व्यभिचारवत्वेऽपि तस्याप्रामाण्यं[5] ? तस्य तन्नान्तरीयकतया[6] प्रतिपत्तेरिति चेत्, आगतं पुनरप्यनुमानम्[7] । अतो नानुमानमंतरेण क्षणमपि जीवनं चार्वाकस्य । कुतो वा परस्य प्रतिपत्तिर्यतस्तत्प्रसिद्धमनुमानस्य । प्रत्यक्षत इति चेन्न, तेनाऽपि शरीरस्यैव परिच्छेदान्न बोधात्मनः परस्य । तस्य तदनर्थांतरत्वात् स एव तस्यापि परिच्छेद इति चेन्न, शरीरप्रत्यक्षत्वेऽपि बुद्धिविकल्पे संशयात् । न हि शरीरं पश्यतः पंडितोऽयं मूर्खो वा साधुरयमसाधुर्वेति निश्चयो भवति परीक्षानिरपेक्षं तत्संभावनापमानयोः प्रसंगात् । माभूत्परस्य प्रतिपत्तिस्तत्प्रसिद्धमप्यनुमानम्[10]मिति चेत्कथमनुमानाभावे शास्त्रं ? तस्यानुमाने प्रसिद्धभूतोपादानचैतन्यादिविषयत्वेन तदभावे निर्विषयत्वेनानुपपत्तेः । किमर्थं वा तत् ? न तावदात्मार्थ[11]मात्मनः प्रागेवावगततदर्थत्वादन्यथा तत्प्रणयनानुपपत्तेः । तादृशस्या[12]पि क्रीडनार्थं तदिति[13] चेन्न, [14]विचारोपन्यासात् । न हि विचारः क्रीडनांगं, कर्कश[15]त्वेन चित्तपरितापहेतुत्वात् । नाऽपि

१ वृक्षादिस्वभावतया । २ शिंशपात्वादेः । ३ लतादिस्वभावत्वेन । ४ अनुमानस्य । ५ व्यभिचारवतो लिंगस्य । ६ अविनाभावरूपतया । ७ "अनुमानमप्रमाणं संभवद्व्यभिचारलिंगत्वात् प्रसिद्धानैकांतिकलिंगवत् ।" ८ इतरवादिनः । ९ सत्कारावज्ञयोः । १० मा भूदिति शेषः । ११ शास्त्रं । १२ अवगतशास्त्रार्थस्याऽपि पुंसः । १३ तत् शास्त्रप्रणयनं । १४ शास्त्रे इति शेषः । १५ विचारस्येति ।

परार्थं परस्याप्रतिपत्तेः । अस्त्येव तत्प्रतिपत्तिर्व्यापारादेर्लिंगात्तस्य बुद्धिपूर्वकत्वेन स्वशरीरे प्रतिपत्तिरिति चेदागतं पुनरप्यनुमानम्, अवधृतव्याप्तिकादर्थादर्थांतरप्रतिपत्तेरेव तत्त्वात् । न चैवं प्रत्यक्षादनुमानवदनुमानादर्थापत्तिरप्यन्यन्यदेव प्रमाणं, तदविशेषात् । कथमविशेषो बहिर्व्याप्तेरनुमानस्यांतर्व्याप्तेश्चार्थापत्तेर्भावादिति चेन्न । अप्यनुमानेऽप्यंतर्व्याप्तेरेव गमकांगत्वेन निवेदयिष्यमाणत्वात् । ततः पर्वतोऽयमग्निमान् धूमवत्त्वादिति वाऽग्निरयं दाहशक्तियुक्तो दाहदर्शनादित्यप्यनुमानमेव नापरं प्रमाणम् ।

अभावस्तर्हि प्रमाणांतरं प्रत्यक्षादावनंतर्भावात् इति चेत् न, तस्याज्ञानत्वेन प्रामाण्यस्यैवासंभवात् । ज्ञानमेवासौ, भूतले तज्ज्ञानादेव घटाभावस्यावगमादिति चेत्, ननु तस्याभावो नाम भूतलस्य कैवल्यमेव नापरोऽप्रतिवेदनात्तत्रं च तज्ज्ञानं प्रत्यक्षमेव । न तत्कैवल्यमात्रस्य ज्ञानमभावज्ञानमपि तु घटो नास्त्यत्रेत्याकारमिति चेन्न, तस्याप्यनुस्मर्यमाणघटाविशिष्टतयोपलभ्यमानतत्कैवल्यपरामर्शिनः प्रत्यभिज्ञानत्वेन तदंतरस्वानुपपत्तेः; नाऽस्त्यत्र घटोऽनुपलब्धेर्गगनकुसुमवदित्याकारत्वेऽपि तस्यानुमान एवांतर्भावादिति न प्रामाणांतरत्वमभावस्यापि ।

लिंगात् । २ प्रभाकरमतमाशंक्य निराकरोति । ३ अर्थापत्तेः ४ सर्वमनकांतात्मकं सत्वादित्यादिसपक्षविकलोदाहरणादिष्वभिधास्यमानत्वात् । ५ भाट्ट आह । ६ अभावप्रमाणं ज्ञानमज्ञानं वेति विकल्पद्वयं मनसि निधाय प्राह जैनः । ७ अज्ञानस्य प्रामाण्यासंभवः प्रागेव समर्थितः । ८ विज्ञानं वाऽन्यवस्तुनि । ९ जैनो वदति । १० घटाभावस्य भूतलकैवल्ये सति ॥ ११ "गृहीत्वा वस्तुसद्भावं स्मृत्वा च प्रतियोगिनं । मानसं नास्तिताज्ञानं जायतेक्षानपेक्षया" । १२ उपलभ्यमानभूतलकैवल्यं पश्चात्स्मर्यमाणघटाविशिष्टतया परिवृत्य जानीत इत्यर्थः ।

किंलक्षणं तर्हि साधनं यतोऽनुमानमिति चेत्, पक्षधर्मत्वं सपक्ष एव सत्त्वं विपक्षे वाऽसत्त्वमेवेति त्रिलक्षणमिति केचित्। तदसत्। एवं सत्युदेष्यति शकटं कृत्तिकोदयादित्यस्य पक्षधर्मत्वाभावेनागमकत्वोपपत्तेस्तदभावश्च शकटे धर्मिण्युदेष्यत्वे साध्ये कृत्तिकोदस्य हेतोरभावात्। नायं दोषः, कालस्य धर्मित्वात्तत्र च तद्भावात्; तथा च प्रयोगो मुहूर्त्तपरिमाणः कालः शकटोदयवान् भवति कृत्तिकोदयत्वात् प्रवृत्ततत्कालवदिति चेन्न, एवमप्ययस्कारकुटीरधूमेन पर्वतपावकस्यानुमानापत्तेस्तदुभयगर्भस्य विस्तारिणः पृथिवीतलस्य धर्मित्वेन हेतोः पक्षधर्मत्वोपपत्तेः। नायं दोषस्तस्य तदविनाभावनियमाभावादिति चेत्, न तर्हि कालादिधर्मिकल्पनयाऽन्यत्रापि पक्षधर्मत्वोपपादनेन किंचित्सतोऽपि तस्य गमकत्वं प्रत्यनंगत्वात्। नाऽपि सपक्षे सत्वेन, विनाऽपि तेनै केवलव्यतिरेकिणो गमकत्वनिवेदनात्। नाऽपि विपक्षासत्वेनासद्विपक्षस्यापि सर्वमनेकांतात्मकं सत्वाद्दित्यादेः स्वसाध्यप्रत्यायनसामर्थ्यस्याग्रे निरूपणात्। नाऽपि पक्षधर्मत्वादित्रयेण, सत्यपि तस्मिन् सः श्यामस्तत्पुत्रत्वादितरतत्पुत्रवदित्यत्रै तत्वस्यागमकत्वात्। अस्ति ह्यत्र तत्त्रितयं धर्मिणि सपक्षे च श्यामे तत्पुत्रत्वस्य भावादश्यामादन्यपुत्रादपवृत्तेश्च !!!

स्यान्मतं न पक्षधर्मत्वादिकं साक्षाल्लक्षणं लिंगस्याविनाभावस्यैव तथा तत्वात्तस्य तु तत्रैव भावात्। तदपि तल्लक्षण-

---

१ बौद्धाः। २ मुहूर्तपरिमाणकाले धर्मिण्यपि। ३ तदुभयगर्भे विस्तारि भूतलं पर्वतामिमत् अयस्कारकुटीरधूमवत्वादिति। ४ उदेष्यति शकटं कृत्तिकोदयादित्यत्राऽपि। ५ सर्वं जीवच्छरीरं सात्मकं प्राणादिमत्वात् व्यतिरेके भस्मवदित्यस्य, सर्वं क्षणिकं सत्वात् तत्र खरविषाणवदित्यस्य। ६ ज्ञापनं। ७ अनुमाने। ८ व्यावृत्तेः। ९ तस्मिन्सत्येव।

त्वेनोक्तं, ततोऽविनाभावविरहेऽपि तद्भावो न दोषाय तद्वादिनं इति, तन्न । प्रत्येकं पक्षधर्मत्वाद्यभावेऽप्यविनाभावस्य निरूपितत्वात्तत्समुदायेन तदभावेऽपि संति प्रमाणानीष्टसाधनादित्यादौ तद्भावात्तन्न त्रैरूप्यं साधनलक्षणम् ।

नाऽपि पांचरूप्यं तत्राऽप्यविनाभावस्यानियमात् । पक्षधर्मत्वे सत्यन्वयव्यतिरेकावबाधितविषयत्वमसत्प्रतिपक्षत्वं च पांचरूप्यं । न चेह तन्नियमः, प्रकृते हेतौ तदभावेऽपि तद्भावात्, तत्पुत्रादौ तद्भावे तदभावादस्ति हि तत्पुत्रत्वस्य पक्षधर्मत्वमन्वयव्यतिरेकावबाधितविषयत्वमपि सः श्याम इति पक्षस्य प्रत्यक्षादिना बाधानुपलब्धेरसत्प्रतिपक्षत्वमपि श्यामत्वविपर्ययसाधनस्य प्रत्यनुमानस्याप्रतिपत्तेः । तन्न त्रैरूप्यादिकं लक्षणं लिंगस्य साध्याविनाभावनियमस्यैव तत्त्वोपपत्तेः । सति तन्निर्णये त्रैरूप्यादिभाववत्तदभावेऽपि साध्यप्रतिपत्तेरावश्यकात् । एवमपि स्वभावकार्यानुपलब्धिभेदेन त्रिविधमेव लिंगं । अविनाभावस्य तत्रैव नियमादिति चेत्, न । रसादे रूपादावतत्स्वभावादेरपि गमकत्वप्रतिपत्तेः । न हि रसादे रूपादिस्वभावत्वं भेदेन प्रतिपत्तेः । नाऽपि तत्कार्यत्वं समसमयत्वात् । तत्कारणकार्यत्वादस्त्येव तस्य तत्कार्यत्वं पारंपर्येणेति चेन्न, इंन्धनविकारस्यापि पावकजन्मन एवं धूमकार्यत्वेन तल्लिंगत्वापत्तेः । न चैवं धूमादिभावेन तत्सं-

---

१ "तस्य तु तत्रैव भावा" दित्यनेनाविनाभावस्य व्याप्यत्वं पक्षधर्मत्वादिकस्य व्यापकत्वं चाभिहितं यतः । २ सौगतस्य । ३ सपक्षे सत्वं विपक्षाद् व्यावृत्तिश्च । ४ त्रैरूप्यादिभावे सति यथा साध्यप्रतिपत्तिः । ५ बौद्धः प्रत्यवतिष्ठते, अविनाभाव नियमस्य लिंगलक्षणत्वेऽपि । ६ उत्तररूपलक्षणकारणभूतप्राक्तनरूपलक्षणकार्यत्वात् । ७ भस्मादेरिति भावः ।

भवेन व्यभिचारात्, रसादेरपि तत्कारणस्य प्रतिपत्तेरेव रूपादेरपि प्रतिप्रत्तिस्तस्य तज्जननधर्मतया ततोऽनुमानात्ततः कार्यतयैव तत्र तस्यैव लिंगत्वमिति चेन्न, धूमशिंशपादेरप्यग्निवृक्षादिकार्यस्वभावतया प्रतिपत्तेरेवाग्निवृक्षादिप्रतिपत्तित्वापत्त्या लिंगव्यवहारस्यैवाभावोपनिपातात् । रसादिकारणात्तर्हि रूपादेरवगम इति चेन्न, कारणस्य लिंगत्वानभ्युपगमात् । स्वभावलिंगमेव तत्तत्र साध्यस्य रूपादेस्तन्मात्रेणैव भावात्, स्वसत्तामात्रानुबंधिसाध्यविषयस्य लिंगस्य स्वभावलिंगत्वोपगमादिति चेत्; न । तत एव धूमादेरपि तल्लिंगत्वप्रसंगेन कार्यलिंगस्याभावानुषंगान्न रसादेः कार्यस्वभावयोरंतर्भावो नाऽप्यनुपलंभे विधिसाधनत्वादिति कार्यादिभेदेनात्रैविध्यं लिंगस्य ।

नाऽप्यन्वयादिभेदेन संति प्रमाणानीष्टसाधनादित्यस्यागमकत्वप्रसंगात् । नह्यसावन्वयी व्यतिरेकी वा साधर्म्योदाहरणादेरभावादत एव नान्वयव्यतिरेक्यपि । न चासावगमक एवेष्टसाधनस्य प्रमाणसद्भावाविनाभावितया निर्णयात् । प्रमाणनिरपेक्षे हि तत्साधने भवत्यतिप्रसंगः स्वाभिमतस्य तत्वोपप्लवसंविदद्वैतादेरिव तद्विपर्ययस्यापि तथा तत्प्रसंगात् । नापि संयोग्यादिभेदेन चातुर्विध्यं, तस्य कृत्तिकोदयस्य शकटोदयादावलिंगत्वापत्तेः । नहि तत्र तस्य संयोगो धूमस्येवाग्नौ । नाप्यसौ तस्य समवायी गोरिव विषाणादिः । न च तेन सहैकार्थसमवायी रूपादिनेव रसादिः । न च तद्विरोधी तद्विधिलिंगत्वात् । तन्न लिंगे त्रैविध्या-

१ इत्यत्र तृतीया हेत्वर्थे नतु सहार्थे । २ अनुभूयमानात् । ३ पूर्वरूपादेः । ४ अनुभूयमानरसलक्षणसमानकालीनस्य । ५ पूर्वरूपक्षण उत्तररूपक्षणजनकः पूर्वरूपक्षणत्वात् संप्रतिपन्नवत् । ६ अंतर्भावः । ७ तत्वसद्भावपुरुषाद्वैतादेः । ८ संयोगिसमवायिएकार्थसमवायितद्विरोधि भेदेन । ९ लिंगस्य । १० कृत्तिकोदयः ।

दिनियमकल्पनमुपपन्नम्। अतो[1]ऽनियतस्यापि साध्याविनाभावनियमविषयस्यानेकस्याभावात्।

संक्षेपेण तु तद्[2]विध्यमानं द्विधा भवति, विधिसाधनं प्रतिषेधसाधनं चेति। विधिसाधनमपि द्वेधा, धर्मिणस्तद्विशेषस्य चेति। धर्मिणो यथा; संति बहिरर्थाः साधनदूषणप्रयोगादिति। कथं पुनरतो भावधर्मिणो बहिरर्थस्य साधनं? [3]कथं च न स्यात्? [4]अस्य तद्भावधर्मत्वे तद्वदसिद्धत्वापत्तेस्तदभावधर्मत्वे चातस्तदभावस्यैव सिद्धेर्विरुद्धत्वोपनिपातात्; तदुभयधर्मत्वे च व्यभिचारप्रसंगादिति चेन्न, [6]प्रत्येको[7]भयधर्मविकल्पविकलस्यैवास्याभ्यनुज्ञानात्। कथमेवं[8] तस्य बहिरर्थभावं प्रत्येव लिंगत्वं न तदभावं प्रत्यपीति चेन्न, तत्रैव तस्याविनाभावनियमाद्धर्मिधर्मस्यापि कृतकत्वादेरनित्यत्वादौ तत एव गमकत्वोपपत्तेर्न धर्म्मिधर्मत्वमात्रेणै[9]कशाखाप्रभवत्वादावपि तदुपनिपातेनातिप्रसंगापत्तेः। [10]तत्र साधनं नीलादेः संवेदनत्वसमर्थनं दूषणं बहिरर्थत्वनिषेधनं तयोः प्रयोगः प्रकाशनं[11] नीलादिः संवेदनात् व्यतिरिक्तस्तद्वेद्यत्वात् तत्सरूपवदित्यादिः, न जड़ो नीलादिः प्रतिभासमानत्वात् सुखादिवदित्यादिश्च, कथं पुनरस्य बहिरर्थाभावेऽनुपपत्तिरिति चेत्, अस्य बहिरर्थविशे[12]षादेव। न हि तदभावे तद्विशेषस्य संभवः वृक्षाभावे शिंशपाभा-

१ न विद्यते त्रैविध्यादि नियतं यत्र। २ साधनं। ३ परः प्राह। ४ जैन आह। ५ "असिद्धो भावधर्मश्चेत् व्यभिचार्युभयाश्रितः। विरुद्धो धर्मो भावस्य सा सत्ता साध्यते कथं" इति कारिकां मनसि धृत्वा परः प्राह। ६ भाव, अभाव। ७ भावाभावश्च। ८ धर्मित्वाभावे। ९ अन्यथा, सर्वफलानि पक्वानि कर्माणि एकशाखाप्रभवत्वात्। १० भावं प्रत्यविनाभावाभावं समर्थयते परः। ११ उच्चारणं। १२ प्रयोगस्य बहिरर्थविशेषत्वं शब्दरूपत्वात्प्रतिपत्तव्यं।

वस्यैव प्रतिपत्तेः । नासौ तद्विशेष आरोपितरोपिरूपत्वादिति चेत्, न, ततः सर्वशक्तिविकलाद्दनिष्टवदिष्टस्याप्यसिद्धेः । अप्यनारोपितोऽप्ययं बोध एव न बहिरर्थ इति चेत् न; प्रतिपाद्यस्य तदभावात् । प्रतिपादकस्येति चेत्, कथं ततः प्रतिपाद्यस्य प्रकृतार्थप्रतिपत्तिरन्यबोधादन्यस्य तदनुपपत्तेरन्यथा प्रत्यात्मबुद्धिभेदकल्पनावैफल्योपनिपातात् । तस्मादर्थविशेष एवाऽयमित्युपपन्नमेवातो बहिरर्थव्यवस्थापनं तदभावे स्वयमप्यभावापत्तेः ;

तथेदमपरं धर्मिसाधनं संति प्रमाणानीष्टसाधनादिति । न हि प्रमाणनिरपेक्षमिष्टस्य विभ्रमैकांतादेः साधनमुपपन्नं. तद्विपर्ययस्यापि तथैव तत्प्राप्त्या तदेकांताभावप्रसंगात् । तद्विपर्ययस्योपायाभावोपदर्शनेन प्रतिक्षेपे तदेकांत एव पारिशेष्यादवतिष्ठत इति चेदस्ति तर्हि प्रमाणमुपायाभावोपदर्शनस्यैव तत्वादन्यथा ततस्तदेकांतविपर्ययप्रतिक्षेपानुपपत्तेः । पारिशेष्यं च यदि न प्रमाणं न तद्बलात्तदेकांतस्य तद्विपर्ययव्यवस्थापनम् । तस्मात्प्रमाणमेव तत्तेत्र्युपपन्नमेवेष्टसाधनान्यथानुपपत्त्या प्रमाणास्तित्वव्यवस्थापनम् । एवमन्यदपि धर्मिसाधनमभ्यूहितव्यम् ।

धर्मिविशेषसाधनमपि द्वेधा, धर्मिणोऽनर्थान्तरमर्थान्तरं चेति । अनर्थान्तरमपि द्विविधं, सपक्षेण विकलमविकलं चेति । तत्राद्यं सर्वमनेकान्तात्मकं सत्वादिति । सत्वं खलु सामर्थ्येन व्याप्तमसमर्थाद् व्योमकुसुमादेस्तस्य व्यावृत्तेः । सामर्थ्यस्य चैकत्वे न ततः प्रदीपादिसंबंधिनः कज्जलमोचनतैलशोषादिकार्यम्, अनेकत्वे च

१ साधन दूषणप्रयोगः बहिरर्थविशेष इत्यारोपितरूपत्वात् । २ प्रतिपादकबोधात् । ३ प्रकृतार्थप्रतिपत्त्यनुपपत्तेः । ४ प्रसक्तस्य प्रतिषेधे अन्यत्र प्रसंगात् शिष्यमाणे संप्रत्ययः परिशेषस्तस्य भावः पारिशेष्यं । ५ विभ्रमैकांतादिव्यवस्थापने । ६ क्रियाकारकात् । ७ आदिशब्देन वर्तिकादाहोर्ध्वज्वलनस्वपरप्रकाशनतमश्छेदनस्फोटादिकरणानुवृत्तव्यावृत्तप्रत्ययोत्पादनप्राणिविशेषदृष्टिप्रतिबंधनमनुष्यादिदृष्टयप्रतिबंधनप्राणिविशेषमारणप्रदीपांतरकारणादि ग्राह्यं ।

कथं न भावस्यानेकांतात्मकत्वं । भावतस्तस्य व्यक्तिरेकादिति चेत् न, समर्थो भाव इति भावसामानाधिकरण्येन सामर्थ्यस्याप्रतिपत्तिप्रसंगात् । तथा तत्प्रतिपत्तेरव्यतिरेक एव द्रव्यत्वं सामान्यं संवेदनं प्रमाणमित्यादौ दृष्टत्वात् । कथं पुनरेकस्यानेकत्वं विरोधादिति चेत् न, तद्भावे तत्प्रतिपत्तेरेवानुपपत्तेर्विरोधस्य हि विरोधिनोऽवगमे सत्येव प्रतिपत्तिः । अवगमश्च नैकस्वभावया बुद्ध्या तयोरेकत्वापत्तेः । अनेकस्वभावायाश्चानेकांतमनिच्छतामसंभवात् । एवं वैयधिकरण्यादिप्रतिपत्तावपि वक्तव्यम् ।

संशयस्तु स्वयमेव निर्णयानिर्णयरूपतयाऽनेकांतरूपतामुपजीवन्न तत्प्रतिक्षेपाय संपद्यते । भावस्यानेकरूपत्वं यद्येकस्वभावात्ततः कार्यमप्यनेकं किं न स्यात् ? अनेकस्वभावाच्चेदनवस्था, पुनस्तस्याप्यन्यतस्ततो भावात् । इत्यपि न युक्तं; स्वहेतोरेव तथाविधात्तस्य तद्रूपतयोत्पत्तेर्हेतुतथाविधत्वस्यापि तद्धेतुतथाविधत्वादेव भावात् । न चैवमनवस्थानं दोषोऽनादित्वात्तत्प्रबंधस्य । ततो युक्तं सत्त्वं सर्वस्यानेकात्मकत्वं तदन्यथानुपपत्तिनियमवत्तयासाधयत्सपक्षविकलस्योदाहरणम् ।

सपक्षाविकलमपि द्विधा, सपक्षस्य व्यापकमव्यापकं चेति । व्यापकं यथा, अनित्यः शब्दः कृतकत्वात् घटवदिति । सपक्षे

१ पदार्थस्य । २ पदार्थतः । ३ भेदात् । ४ भेदाभेदयोर्विधिनिषेधयोरेकत्राभिन्ने वस्तुन्यसंभवः शीतोष्णयोरिवेति विरोधः, भेदस्यान्यदधिकरणमभेदस्य चान्यदिति वैयधिकरण्यं, यमात्मानं पुरोधाय भेदोयं च समाश्रित्याभेदस्तावात्मानौ भिन्नौ चाभिन्नौ च तत्राऽपि तथा परिकल्पनादनवस्था, येन रूपेण भेदस्तेन भेदश्चाभेदश्चेति संकरः, येन भेदस्तेनाभेदो येनाभेदस्तेन भेद इति व्यतिकरः, भेदाभेदात्मकत्वे च वस्तुनो साधारणाकारेण निश्चेतुमशक्तेः संशयः, ततश्चाप्रतिपत्तिः, ततोऽभाव इत्यानेकांतेऽष्टदूषणानि । ५ बुद्धेः । ६ गच्छन् । ७ "मूलक्षयकरीमाहुरनवस्थां हि दूषणं । वस्त्वानंत्येऽप्यशक्तौ च नानवस्था निवार्यते" । ८ अपेक्षितपरव्यापारो हि भावः कृतक उच्यते ।

व्यापकत्वं चाऽस्य घटवदनित्ये सर्वत्र विद्युद्वनकुसुमादावपि भावात् । तद्व्यापकत्वं तु तत्रैव साध्ये प्रयत्नांतरीयकत्वं, तस्य च तत्वं घटवदनित्येऽप्यन्यत्र जलधरध्वानादावभावात् ।

धर्मिणो भिन्नमपि लिंगमनेकधा, कार्यकारणमकार्यकारणं चेति । कार्यं धूमः पर्वतादौ हि पावकस्य, व्याहारादि शरीरे जीवस्य कारणं, मेघोन्नतिविशेषो वृष्टेः, अभ्यवहारविशेषस्तृप्तेः। कारणस्य कथं लिंगत्वं ? प्रतिबंधवैकल्याभ्यां तस्य कार्यत्वानियमादिति चेत्, सत्यम्; यदि कारणमात्रस्य लिंगत्वं, न चैवम्, अन्यथाऽनुपपत्तिनियमनिर्णयवत एव तस्य तत्त्वोपगमात्तथाविधत्वं च प्रसिद्धमेव मेघोन्नतिविशेषादौ व्यवहारिणामिति निरवद्यं तस्य लिंगत्वम् ।

अकार्यकारणं पुनर्द्वेधा,साध्येन समसमयं विभिन्नसमयं चेति । समसमयं रसादि रूपादेः, शरीराकारविशेषो जीवस्य। प्रतिपद्यंते हि गाढमूर्च्छाद्यवस्थायां तद्विशेषदर्शनाज्जीवत्ययमिति प्रतिपत्तारः । कथमन्यथा तदवस्थापनोदाय तेषां चिकित्साविधावुपक्रमं इति । विभिन्नसमयं पुनरद्य भास्करोदयः उत्तरेद्युस्तदुदयस्य । नाऽवश्यंभावस्तदुदयस्य कदाचित्पतिव्रतया तत्प्रतिबंधस्य श्रवणादिति चेन्न, जनश्रुतिमात्रविश्वासेन व्यभिचारकल्पनस्यायोगात्; अन्यथा पुत्रस्य पितृप्रभवत्वानुमानमपि न भवेत्, द्रोणवदपितृकस्यापि तद्भावस्य संभवात् । अस्ति हि तत्रापि जनश्रुतिः " द्रोणः कलशादुत्पन्न " इति । कथमेवमप्युत्तरोदयं प्रत्यकार्यत्वमस्येति चेत्, ततः प्रागेव भावात् । तथाऽप्युत्तरस्य

१ अर्थांतरं । २ सौगतः।३ सामर्थ्यप्रतिबंधकारणांतरवैकल्याभ्यां ।४ निराकरणाय । ५ ज्ञात्वारंभ उपक्रमः । ६ उत्तरेद्युः भास्कर उदेष्यति अद्य भास्करोदयात् । ७ शांडिल्या । ८ अयं पितृप्रभवः पुत्रत्वात् ॥

कारणत्वे 'प्रागभाव सर्वहेतूनामित्यस्य व्यापत्तिः। तं प्रत्यकारणत्वमपि चिरव्यवहितत्वेन, तत्कालप्राप्त्यभावात्। अन्यथा तादृशादेवाविद्यातृष्णादेर्मुक्तिगतस्यापि संसारोत्पत्तेर्न मुक्तिरात्यंतिकी भवेत्। कथं पुनः पुनरतत्स्वभावस्यातत्कार्यस्य च तदुदयस्य तत्राविनाभावो गवादेस्तादृशस्य श्वादौ तदनवलोकनादिति चेत्, तत्स्वभावादेरपि कथं? चूतत्वस्य तत्स्वभावत्वेऽपि वृक्षत्वे, भस्मनस्तत्कार्यत्वेऽपि पावके तदनवलोकनात्। कथमन्यथा चूतत्वं लतायां निर्दहनमपि भस्म भवेत्। विशिष्टस्यैव तस्य वृक्षत्वादौ नियमो न तन्मात्रस्य तथाप्रतीतेरिति चेत्, सिद्धमिदानीमस्वभावादेरप्यद्यतनतपनोदयस्य श्वस्तनतदुदयं प्रत्यविनाभावित्वं, तथा प्रतीतेः, न गवादेरश्वादिकं प्रति विपर्ययात्। ततो युक्तमविनाभावसंभवादस्वभावादेरपि लिंगत्वम्। एवमन्यदपि विधिसाधनं प्रतिपत्तव्यम्॥

प्रतिषेधसाधनमपि द्विधा, विधिरूपं प्रतिषेधरूपं चेति। विधिरूपमप्यनेकधा, विरुद्धं तत्कार्यमकार्यकारणं चेति। तत्र विरुद्धं यथा, नाऽस्ति तत्र शीतस्पर्शो वह्नेरिति। वह्निः खलूष्णस्पर्शात्मा रूपविशेषादवगम्यमानस्तत्प्रत्यनीकस्य स्पर्शस्याऽभावं गमयति। विरुद्धकार्यमत्रैव साध्ये धूमादिति। धूमो हि वह्निं तत्कार्यत्वेनावगमयंस्तद्विरोधिनः स्पर्शस्याभावमवबोधयति।

कारणविरुद्धकार्यमस्यैव प्रभेदः। तद्यथा–नाऽस्य हिमजनितो रोमहर्षादिविशेषो धूमादिति। धूमः खलु हिमस्य तत्प्रत्यनीकवह्-

---

१ सौगतः। २ साध्ये। ३ चूतत्वस्य तरुणा सह भस्मनश्च सह पावकेनाविनाभावोऽस्तीति चेत्। ४ अग्निना सहितं ५ नियमस्य। ६ लिंगत्वं। ७ अविनाभावित्वं नास्तीत्यर्थः। ८ पिंगांगभासुराकारत्।

नोपनयनद्वारेणाभावमाविर्भावयंस्तत्कार्यस्य तद्विशेषस्याभावमवबोधयति ।

विरुद्धकारणं; नायं मुनिः परपीडाकरः कृपालुत्वादिति । कृपालुत्वं हि परहितनिबंधनतयाऽनुग्रहमुपस्थापयत्तद्वतस्तत्पीडाकरत्वमपाकरोति ।

कारणविरुद्धकारणमस्यैव प्रभेदः । तद्यथा—नाऽस्य मुनेर्मिथ्यावादस्तत्वशास्त्राभियोगादिति । तदभियोगो हि रागादिरहितस्य [1]तत्कारणतया [2]तत्वज्ञानसद्भावमुपनिपातयंस्तत्प्रत्यनीकमिथ्याज्ञाननिवृत्तिनिवेदनद्वारेण तन्निबंधनमिथ्यावादस्य विरहं [3]निरपवादमुपपादयति ।

अकार्यकारणमप्यनेकधा, विरुद्धव्याप्तादिविकल्पात् । विरुद्धव्याप्तं यथा, नास्ति भावेषु सर्वथैकांतः सत्वादिति । सत्वं खल्वनेकांतेन व्याप्तमन्यथा तदनुपपत्तेः । तथाहि—तदर्थक्रियाकारिण एवं व्योमारविंदादावतत्कारिणि तदभावात् । तत्कारी च यद्येकस्वभावः, अत एकमेव कार्यं भवेन्न देशादिभिन्नमनेकम् । अन्यथा सकलस्यापि जगत एकहेतुकत्वापत्तेः । सहकारिभेदादेकस्वभावादपि तदनेकमुपपन्नमेवेति चेत्, तद्भेदस्यैव तर्हि तत्र हेतुत्वं, तदनु तथैव तस्योत्पत्तेर्नैकस्वभावस्य विपर्ययात् । तस्यापि तदा भावाद्धेतुत्वेऽतिप्रसंगस्तत्कालभाविनः सर्वस्यापि तत्र तत्वापत्तेः । नैकस्वभावस्य नाऽपि सहकारिभेदस्य तत्र हेतुत्वं, तत्समुदायस्यैव तत्वादिति चेत्, तस्यैव तर्हि सत्वं स्यान्न प्रत्येकं समुदायिनां । न च तत्र तदभावे समुदायस्यापि तत्तद्व्यतिरेकि-

१ मुनेः । २ तत्वज्ञानकारणतया । ३ निर्दुष्टं । ४ घटत ५ अर्थ क्रियाकारी भावः ६ आदिशब्देन कालाकारयोर्ग्रहणं । ७ अनेककार्योत्पत्तिवेलायां ।

णस्तस्याप्रतिवेदनादित्यनेकस्वभावस्यैवानेककार्यकारित्वमभ्यनुज्ञातव्यम्। अनेकस्वभावत्वं च तस्य स्वकारणात्तथाविधात्तस्याऽपि तत्वं तथाविधात्तद्धेतोरिति नानवस्थानमत्र दोषस्तत्प्रबंधस्यानादित्वादित्युपपन्नमनेकांतव्याप्ततया सत्वस्य तद्विरोधिसर्वथैकांतप्रत्याख्यानं प्रति साधनत्वम्।

विरुद्धसहचरं यथा—नास्य मुनेर्मिथ्याज्ञानं सम्यग्दर्शनादिति। सम्यग्दर्शनं तत्[2]साहचर्यनियमेन सम्यग्ज्ञानम्[3]उपसर्पयत्तत्प्रत्यनीकमिथ्याज्ञानप्रत्यवायमुपपादयतीत्युपपन्नं तत्र तस्य लिंगत्वं। विरुद्धसहचरस्य कारणमत्रैव साध्ये तत्वाधिगमादिति, कार्यं चानुकंपाऽऽस्तिक्यादिरिति। तत्वाधिगमो हि सम्यग्दर्शनस्य कारणमनुकंपादि च कार्यमविनाभावनिर्णयात् सम्यग्ज्ञानसहभाविनस्तस्य भावमवबोधयन्मिथ्याज्ञानव्युदासाध्यवसायमासादयति। एवमन्यदपि विधिरूपं प्रतिषेधलिंगं प्रतिपत्तव्यम्।

प्रतिषेधरूपमपि तल्लिंगमनेकधा। तत्र स्वभावानुपलंभो यथा—नास्ति बोधत्मनि[6] रूपादिमत्वमनुपलंभात् खरमस्तके विषाणवदिति। न चेदमत्र मंतव्यं, परमाण्वादेः सतोऽपि क्वचिदनुपलंभाद् व्यभिचार इति; ततः[7] प्रकृतानुपलंभस्य[8] गोपालकलशधूमादेः पर्वतधूमादेरिव विलक्षणत्वेन तद्दोषोपनिपाताभावात्। तर्हि दृश्यविषयत्वमेव ततस्तस्य वैलक्षण्यमिति दृश्यानुपलंभस्यैव हेतुत्वमिति चेत् न, अदृश्यानुपलंभस्याप्यात्मनि पिशाचरूपत्वाभावे गमकत्वात्; अन्यथा पिशाचो नाहमस्मीति व्यवहा-

१ वस्तुनः। २ सम्यग्ज्ञानं। ३ उपनयत्। ४ अभानं। ५ तत्वार्थोपदेशग्रहणादिभावः तत्वार्थानां श्रद्धानपूर्वकमवधारणं हि ग्रहणमत्रेष्टमन्यथाऽस्य ग्रहणाभासत्वात। ६ चेतसि। ७ परमाण्वाद्यनुपलंभात्। ८ रूपादिमत्वानुपलंभस्य।

रानुपपत्तेः । न च पिशाचस्यादृश्यत्वे तदव्यतिरेकिणस्तद्रूपत्वस्य दृश्यत्वम् । आत्मनोऽदृश्यत्वेन तदभिन्नतयाऽदृश्यत्वमपि तस्येति चेत्, नेदानीमेकांततस्तदनुपलंभस्याभावं प्रति गमकत्वं, दृश्यादृश्यविषयतया संशयनिबंधनत्वात् । तन्न दृश्यविषयतयैव गमकत्वमनुपलंभस्याविनाभावनियमनिर्णये तदपरस्यापि तदुपपत्तेः ।

कारणानुपलंभो यथा—न तत्र गृहे पाकसंभवः पावकानुपलब्धेरिति । कार्यस्यानुपलंभस्तु नाऽत्र शरीरे बुद्धिर्व्यापारादिविशेषानुपलब्धेरिति । कार्यविकलस्यापि कारणस्य संभवान्न तद्वैकल्यात्तदभावप्रतिपत्तिरिति चेत्, कथमिदानीं क्वचिन्मरणस्यावगमो यतस्तत्र दाहादिकमाचरेत्, प्रकारांतरेण तत्प्रतिपत्तेरभावात् । ततः सत्यविनाभावनिर्णये कार्यवैकल्यादुपपन्नैव कारणस्याभावप्रतिपत्तिः । न तत्र शिंशपा वृक्षानुपलब्धेरिति व्यापकानुपलब्धिः । अस्याश्च तं प्रति प्रयोगो यस्य क्वचिद्वृक्षविकलेऽपि तत्सदृशाकारदर्शनेन शिंशपाबुद्धिः । कथं पुनः शिंशपाव्यापकत्वं वृक्षस्य ? लताशिंशपाया अपि लताचूतवत्संभावनादिति चेत्, कथमेवं कारणत्वमपि धूमादौ वह्नेः ? अवह्निकस्यापि तस्य गोपालकलशादौ दर्शनात् । अन्य एव स धूमादिर्वह्निहेतुकास्तत इति चेत् न, वृक्षव्याप्तायास्ततो लताशिंशपाया अपि संभवे ऽन्यत्वाविशेषात् । नास्त्यस्य तत्त्वज्ञानं सम्यग्दर्शनाभावादिति सहचरानुपलब्धिः । व्यभिचारी हेतुरसम्यग्दृशोऽपि रूपादौ तत्वज्ञानस्य भावादिति चेत् न, तेन रूपादेरित्थंभावनिर्णयाभावात् ।

१ पिशाचत्वमिति यावत् । २ अन्यः कश्चिद्व्यक्तिः । ३ प्राणिनि । ४ मृते ५ व्यापारादिविशेषानुपलब्धि विहायाऽन्येन । ६ लताशिंशपा नास्त्येव यदि संभवेऽपि । ७ सम्यग्ज्ञानमिति यावत् । ८ पुंस इति शेषः ।

न ह्यनु[1]पक्रांततन्निर्णयं तत्वज्ञानं नाम बालोन्मत्तादिज्ञानवत् । तन्न व्यभिचारकल्पनमत्र । न भविष्यति मुहूर्तान्ते शकटोदयः कृत्तिकोदयानुपलब्धेरिति पूर्वचरानुपलब्धिः । मुहूर्तात् प्राक् नोदगाद्भरणिः कृत्तिकोदयानुपलब्धेरिति उतरचरानुपलब्धिः । एवमन्यान्यपि विविधिप्रतिषेधलिंगानि प्रतिपत्तव्यानि ।

यदि त[2]त्प्रभवमनुमानं, प्रमाणमेव तर्हि, कस्यचित्कथं तस्य तदाभासत्वमपीति चेत्, स्वार्थव्यवसायवैकल्यात् प्रत्यक्षवत् । दृश्यते हि प्रत्यक्षस्य तद्वैकल्यं क्वचिदव्युत्पत्याऽऽत्मनः[3], क्वचित्संशयात्मनः, क्वचिद्विपर्यासात्मनश्च, तस्य तत्र प्रतीतेः । तदप्यंतरंगावरणोदयाद्बहिरंगादिंद्रियदोषादाशुभ्रमणादेरपि । तद्वदनुमानेऽपि । तत्राप्युक्तस्यांतरंगस्य बहिरंगस्य च हेत्वाभासादे[4]स्तद्धेतोर्भावात् ।

तत्र त्रिविधो हेत्वाभासः, असिद्धानैकांतिकविरुद्धविकल्पात् । असिद्धोऽपि त्रिविध एव, स्वरूपाज्ञातसंदिग्धासिद्धविकल्पात् । तत्र स्वरूपासिद्धो यथा–नित्यः शब्दश्चाक्षुषत्वादिति । न हि शब्दस्य चाक्षुषत्वं श्रावणत्वस्यैव तत्र भा[5]वतः प्रतिपत्तेः । अज्ञातासिद्धस्तु शब्दानित्यत्वे सर्वोऽपि कृतकत्वादिः । न हि तस्य कुतश्चित्परिज्ञानं प्रत्यक्षस्य स्वलक्षणविषयतया [6]सामान्यात्मनि तस्मिन्विकल्पस्य च [7]स्वाकारपर्यवसायित्वेनाप्रवृत्तेः । विकल्पाकार एव सोऽपीति चेत्, कथमिदानीं तस्य पक्षधर्मत्वं [8]शब्दे धर्मिण्यभावात् । तत्र तस्यारोपादिति चेत् न, तत्र तस्येति प्रत्यक्षविकल्पयोरन्यतरेणाप्यशक्यपरिज्ञानत्वात् । अन्यतरा-

---

१ अकृततन्निर्णयं । २ तच्छब्देन लिंगग्रहणं। ३ अनध्यवसायात्मनः । ४ आदिशब्देनपक्षाभासादिकं ग्राह्यं । ५ स्वरूपतः । ६ अनुगताकारे । ७ स्वसंविन्मात्रपर्यवसितत्वेन । ८ स्वलक्षणे । ९ विकल्पाकारकृतकत्वादेः ।

सिद्ध एवायं कस्मान्न भवति मीमांसकस्य शब्दे तदभिव्यक्तिवादिनः कृतकत्वादेरभावादिति चेत् न, शक्यसमर्थनत्वे तस्य तं प्रत्यपि सिद्धत्वात्, अशक्यसमर्थनत्वे च स्वरूपासिध्द एवांतर्भावात् तन्नान्यतरासिध्दो नाम ।

संदिग्धासिध्दः पुनर्धूमोऽयं बाष्पादिर्वा इति संशय्यमानो भूतसंघातः । न ह्यसौ पावकप्रतिपत्तौ धूमतयोपदिष्टो गमको भवति निश्चितस्यैव तत्वोपपत्तेः, संदिग्धस्य चानिश्चितत्वात् ।

प्रतिज्ञार्थैकदेशासिध्दस्तर्हि वक्तव्यः, तद्यथा—अनित्यः शब्दः शब्दत्वादिति । शब्दस्य हि साध्यधर्मधर्म्मिसमुदायरूपप्रतिज्ञार्थैकदेशतया साध्यधर्मवदसिध्दत्वान्न हेतुत्वमिति चेत्, तर्हि धर्मित्वमपि न भवेदिति कथं शब्दानित्यत्वे कृतकत्वादेरपि हेतुत्वमाश्रयासिध्देः । समुदायरूपतयैव शब्दस्य साध्यत्वं न पृथगपि प्रसिद्धत्वात् ततो धर्मित्वमिति चेत्, हेतुत्वमपि स्यादविशेषात् । धर्मित्वं प्रत्युपक्षीणस्य तस्य कथं हेतुत्वमिति चेत् न, धर्मभेदान्नहि येनैव तस्य धर्मित्वं साध्यधर्मं प्रत्यधिकरणभावेन तेनैव तस्य हेतुत्वमपित्वविनाभावनियमेन । कथं पुनर्विपक्षव्यावृत्तिर्यदनित्यत्वे तस्य तन्नियम इति चेत्, कृतकत्वादेरिव सत्वविशेषादेव । न चैवं सत्वादेव साध्यसिध्देर्विफलत्वं शब्दत्वस्यै कृतकत्वादावपि तत्प्रसंगात् । कथं वा शब्दस्य प्रति-

१ वादिप्रतिवादिनोर्मध्य एकस्यासिद्धः । २ मशकादिसमूहः । ३ भूतसंघातं दृष्ट्वा धूमोऽयं बाष्पादि वेति संदेहे समुत्पन्ने वह्निरत्र धूमादिति । ४ बौद्धस्य मतं, प्रतिज्ञा एव धर्मधर्मिसमुदाय एवार्थः प्रतिज्ञार्थस्तस्यैकदेशः सन् हेतुर सिद्ध इत्यर्थः । ५ परवादी । ६ जैनः । ७ स्वरूपेण । ८ कृतकत्वादेर्यथा सत्वविशेषत्वाद्विपक्षव्यावृत्तिः । ९ सतीति शेषः । १० साधनादेव । ११ साधनस्य ।

ज्ञार्थैकदेशत्वं, शब्दशब्दनिर्दिष्टस्य[1] तद्विशेषस्यैव तत्वान्न शब्दसामान्यस्य। तत्कथं तस्यासिद्धत्वं[2]? शब्दशब्देनाऽपि सामान्यस्यैव निर्देशादिति चेत्, विफलमिदानीं सत्वाद्यनुमानमपि[3] वस्तुन्यवस्थां प्रत्यनंगत्वात्। वस्तुनि हि शब्दविशेषे[4] ततो नित्यत्वव्यवस्थितौ तस्य तदंगत्वं नावस्तुनि सामान्ये। नायं दोषः सामान्यानित्यत्वेन विशेषानित्यत्वस्य लक्षणादिति चेत्, लिंगादेव कुतो न तल्लक्षणं[5]? विशेषाणामानंत्येन तत्र लिंगप्रतिबंधस्य दुरवगमादिति चेत् न, सामान्यप्रतिबंधस्यापि तदविशेषात्। तन्न सामान्यस्य धर्मित्वं विशेषस्यैव तत्वात्। कथं तस्य प्रतिज्ञार्थैकदेशत्वेनासिद्धत्वे सामान्यस्यापि तत्वं? विशेषादन्यस्य सामान्यस्यैवाभावादिति चेन्न किंचिदिदानीं लिंगं नाम सत्वादेरपि तथाविधस्याभावात्। भाव एव सत्सदित्यनुगमप्रत्ययस्य तद्विषयस्य भावादिति चेत् न, शब्दः शब्द इति तत्प्रत्ययस्याविशेषात्। तन्न शब्दानित्यत्वे शब्दत्वस्यासिद्धत्वं। नाऽपि रूपाद्यनित्यत्वे रूपादित्वस्य शब्दत्वेन समानयोगक्षेमत्वात्। नाऽप्यनित्यः शब्दोऽनित्यत्वादित्यस्य प्रतिज्ञार्थैकदेशत्वेनासिध्दत्वं शब्देऽपि तदापत्त्या तस्य धर्मित्वाऽभावप्रसंगात्; समुदाया

१ शब्द इति शब्दः शब्दशब्दः । २ शब्दत्वस्य । ३ यत्सत् तत्क्षणिकं यथा जलधरः सँश्च शब्द इत्याद्यनुमानं । ४ शब्दत्वलक्षणे । ५ अनित्यः शब्दः कृतकत्वादित्यनुमानात् शब्दसामान्यस्यानित्यत्वेन साधितेन तद्विशेषाणामनित्यत्वस्य लक्षितलक्षणतया लक्षणात्परिज्ञानात्कुतः शब्दसामान्यस्य शब्दविशेषैः सहाविनाभावात् । ६ विशेषानित्यत्वपरिज्ञानं । ७ अविनाभावस्य । ८ सामान्येन सह ससत्वस्याविनाभावे दुरवगमत्वाविशेषात् कुतस्तस्याप्यानंत्यात् । ९ परवादी । १० परो वक्ति तथाविधसत्वादिरेव । ११ साधनस्य । १२ आक्षेपसमाधानात् ।

पेक्षयाऽपि तस्यापि तदवयवत्वाविशेषात् । कुतस्तर्हि तस्यासिद्धत्वमिति चेत्, तर्हि स्वरूपत एवानिर्णयाद्भवतु । स्वरूपासिध्दत्वादेवायमहेतुरिति चेत् न, शब्दावच्छिन्नस्यानित्यत्वस्य साध्यत्वात् । न च तस्य हेतुत्वं अनित्यमात्रस्य तत्वात्, तत्र च मीमांसकस्याप्यविवादात्, अन्यथा घटादावपि तदभावापत्तेः । कथं पुनः शब्दानित्यत्वाभावे तन्मात्रस्यानुपपत्तिर्यतस्तदनित्यत्वे तस्य हेतुत्वमिति चेत् न, शब्दवत्तदभावेऽपि घटादेर्वस्तुत्वाव्याघातात्, तद्वस्तुत्ववच्छब्देऽप्यनित्यत्वसामान्यस्यापि तद्विशेषेऽन्यथाऽनुपपत्तिमत्त्वादुपपन्नमेव हेतुत्वम् ।

एवमपि न त्रित्वमेवासिद्धस्याश्रयासिद्धस्यापि भावात् । तद्यथा–द्रव्यमाकाशं गुणाश्रयत्वादित्याकाशासत्ववादिनं बौद्धं प्रत्यस्याश्रयत्वासिद्धत्वोपपत्तेरिति चेत् न, आश्रयवत्स्वरूपस्यासत्वे स्वरूपासिद्ध एवांतर्भावात्, सत्वे चान्यथानुपपत्तौ गमकत्वस्यान्यथा च व्यभिचारित्वस्यैवोपपत्तेर्भागासिध्दस्य तर्हि भावान्न त्रित्वमसिध्दस्य । तद्यथा–चेतनास्तरवः स्वापा-

१ अन्यथेति शेषः । २ साध्यरूपस्य साधनस्य । ३ तटस्थो ब्रूते । ४ विशिष्टस्य । ५ शब्दस्यैव नाभ्युपगम्यते नित्यत्वं नान्यत्र । ६ अनित्यत्वमात्रविवादविशेषात् । ७ शब्देनित्यत्वमेव वस्तुत्वमिच्छतां घटादावप्यनित्यत्वमंतरेण वस्तुत्वमिष्यतां तथाचानित्यमात्रमवलोकेन सिद्धयति, अन्यथाऽनुपपत्तिः प्रतिपादिता भवतीत्यत्रावगंतव्यम् । ८ शब्दवदिति, यथा शब्दस्यानित्यत्वाभावेऽपि वस्तुत्वमुपपन्नं तथा घटादेरपि, अनित्यत्वाभावेऽपि वस्तुत्वमव्याहतमिति वस्तु किमप्यनित्यं न स्यात्, न चैवं ततः कारणाद्वस्तुत्वस्य घटादावनित्यत्वेन व्याप्तत्वात्, वस्तुत्ववदिति वस्तुत्वसामान्यस्य विशेषांनित्यत्वव्यवस्थापकतदानित्यत्वसामान्यस्य तद्विशेषे नित्यविशेषेऽन्यथानुपपत्तिमत्त्वादुपपन्नमेव हेतुत्वम् ।

दिति । न हि तरुषु सर्वत्र स्वापः पत्रसंकोचलक्षणस्य तस्य द्विदलेष्वेव भावादिति चेत्, भवत्वेवं न तथाऽपि दोषः, स्वाश्रयेषु तेन पशुमनुष्यादिनिदर्शनबलेन चेतनत्वं व्यवस्थापयता तैरन्तरेष्वपि तद्व्याप्तहेतुस्थापनद्वारेण तस्य व्यवस्थापनात् । परेऽपि तरवश्चेतनास्तत्वात् स्वापवत्प्रसिद्धतरुवदिति । तत् नाऽस्य भागासिध्दत्वं दोषाय गमकत्वाप्रतिक्षेत् । एवमेव शब्दानित्यत्वे प्रयत्नानंतरीयकस्याऽपि भागासिध्दस्य निर्दोषत्वकल्पनोपपत्तेः । अस्ति हि तस्यापि भागासिध्दत्वं समुद्रघोषजलधरध्वानादावभावात् । विपर्यस्तासिध्दस्त्वज्ञातासिध्द एव, न हि धूमस्ताद्विपर्यासेन प्रतीयमानः स्वरूपतः परिज्ञातो नाम. तन्न ततस्तस्य पृथगसिद्धत्वम् ।

अनैकांतिकश्च पुनर्द्विधा–निश्चितसंभाव्यव्यभिचारविकल्पात् । निश्चयश्च व्यभिचारस्य क्वचित्पक्षैकदेशे, यथा–पक्कान्येतानि फलान्येकशाखाप्रभवत्वादुपभुक्तफलवदिति । अस्ति ह्यत्र तत्रैव तन्निश्चयः पक्षीकृतेष्वेव बहुलमामेष्वपि प्रकृतस्य हेतोर्भावात् । क्वचिदन्यत्र, यथा सः श्यामस्तत्पुत्रत्वादितरतत्पुत्रवदिति । अत्र ह्यन्यत्रैव तन्निश्चयस्तत्रैवाश्यामेऽपि तत्पुत्रस्यावलोकनात् ।

संभाव्यव्यभिचारो यथा–विवादापन्नः पुरुषः किंचिज्ज्ञो रागादिमान्वा वक्तृत्वाद्रे रथ्यापुरुषवदिति । संभावनाऽत्र व्यभिचारस्य, सर्वज्ञादावपि विरोधाभावेन वक्तृत्वादेः संभवाविरोधात् । विरोधे वा ज्ञानप्रकर्षतारतम्ये वक्तृत्वस्यापकर्षतारतम्यमुपल-

१ एकदलेषु । २ एकदलाः । ३ अत्र मत्वर्थे प्रत्ययः । ४ भूतसंघातेन । ५ अनुमाने । ६ अनुभूतफलवत् । ७ अनुमाने । ८ अपक्केष्वपि । ९ अनुमाने । १० विपक्षे । ११ वीतरागे । १२ असंभवादिति भावः ।

भ्येत । न चैवं सति तस्मिन् तत्राऽप्यतिशयतारतम्यस्यैव प्रतिपत्तेस्ततोऽतिशयपर्यंतगतज्ञानस्योपि संभवत्येव वक्तृत्वं । न संभवति[2] तस्य वीतरागत्वेन रागविशेषात्मनो विवक्षाया अभावात्तन्निबंधनत्वाच्च वक्तृत्वस्येति चेत् न, तदभावेऽपि गोत्रस्खलनादौ तस्य प्रतिपत्तेः । न हि तत्र यद्विषयं वचनं तद्विवक्षा विद्यते । विवक्षान्तरस्य सतोऽपि हि न तद्धेतुत्वमतिप्रसंगात्[3] । विवक्षापूर्वकत्वे च वक्तृत्वस्यानभ्यस्तस्यापि शास्त्रार्थस्य कश्चिद्वक्ता भवेत् तद्विवक्षायास्तत्राऽपि संभवान्नचैवं व्याख्यातृसेवावैफल्यप्रसंगात् । अभ्याससाहाय्ये भवत्येवेति चेन्न, सत्यभ्यासपाटवे निर्विवक्षस्यैव[4] स्वापादौ तदर्थप्रतिपादित्वस्य प्रतिपत्तेः । तन्न विवक्षावैकल्येन वीतरागस्य वक्तृत्वासंभवकल्पनमुपपन्नम् ।

[5]उपपन्नमेव वैयर्थ्यात्, न हि वीतरागस्य तेन कंश्चिदर्थ[6] इति चेत् न, स्वार्थस्याभावेऽपि परार्थस्य भावात् । तादृशस्य कथं परार्थेऽपि प्रवृत्तिरिति चेत्, भानोः पद्मविकासने कथं[7] ? तथास्वभावेनेति चेत्, समानमिदमन्यत्राऽपि । ततो युक्तं सर्वज्ञादेरपि वक्तृत्वं । एवं पुरुषत्वादिकमपि; तस्यापि क्वचित्[10] सकलज्ञत्वादिनां[9] जैमिन्यादौ वेदार्थज्ञत्वेनेव विरोधाभावात् । [11]सर्वज्ञादेरविद्यमानत्वान्न तत्र वक्तृत्वादिकमित्यपि न[12] युक्तमन्यैस्[13]तस्तदविद्यमानत्वस्य प्रतिपत्तावस्य वैफल्यादनेनाऽपि तदभावस्यैव किंचिज्ज्ञत्वाद्युपनये[14]नेनोपस्थापनादतः[15] एव तत्प्रतिपत्तावन्योन्याश्रय-

---

१ नुः । २ वक्तृत्वमिति शेषः । ३ घटादिकारणस्य मृदादेः पटादिकारणत्वप्रसंगात् । ४ पुंसः । ५ वक्तृत्वासंभवकल्पनं । ६ प्रयोजनं । ७ प्रवृत्तिरिति शेषः । ८ तथा स्वभावेनेतीदं । ९ पुंसि । १० साकमिति शेषः । ११ परवादी वक्ति । १२ जैनो वदति । १३ " अन्यतः " " अतः " वेति विकल्पद्वयं । प्रमाणांतरात् वक्तृत्वादिकात् । १४ आनयनेन । १५ द्वितीयविकल्पः ॥

णमतस्तदभावप्रतिपत्तौ तत्र वक्तृत्वादेरसंभावनमसंभावितव्यभिचाराच्चातस्तदभावस्य प्रतिपत्तिरिति। ततः स्थितं संभाव्यव्यभिचारत्वाद्वक्तृत्वादेरनैकांतिकत्वमिति।

ननु एवं शब्दानित्यत्वे प्रमेयत्वमप्यनैकांतिकमेव भवेत् तस्य नित्ये गगनादावपि भावेन व्यभिचारादिति चेत् न, तस्य कूटस्थस्य प्रमितावनुपयोगादुपयोगे वा कुतो न सर्वदा तस्य प्रमेयत्वं? सहकारिसन्निधिसमय एव तद्भावादिति चेत् न, तदापि प्राच्यरूपापरित्यागेन तदनुपपत्तेः, तत्परित्यागे तु परिणामि नित्यमेव। तन्न कूटस्थं, न च तत्र भावाद्धेतोर्व्यभिचारः, सपक्षभावित्वेन साध्यप्रतिपत्तिं प्रत्यानुकूल्यात्। साध्यसपक्षत्वमपि तस्य शब्देऽपि सान्वयस्यैवानित्यत्वस्य साधनान्न निरन्वयस्य, तद्वति प्रमितेरसंभवात्। न हि सा ततः क्षमसमयान्निष्पन्नत्वेन तस्यास्तन्निरासत्वात्। नाऽप्यतीतान्चिरतरातीतादिव कार्यकालमप्राप्तात्ततोऽपि तदनुपपत्तेः। न चातत्प्रभवया तया तस्य प्रमेयत्वं "नाकारणं विषय" इत्यस्य व्यापत्तेः। कथं पुनः सान्वयविनाशेऽप्यनित्यत्वे साध्ये न व्यभिचारः प्रमेयत्वस्य भाववदभावेऽप्यवस्तुनि भावात् तत्र च वस्तुधर्मस्यानित्यत्वस्यानुपपत्तेरिति चेत् न, तस्य कुतश्चिदप्रतिपत्तेः, व्यतिरेके च भावेभ्यस्तस्य कुतो न तेषां सांकर्यम्। तत्संबंधादिति चेत् न, तेनाऽपि स्वतः संकीर्णा-

१ सर्वज्ञाभावसिद्धौ वक्तृत्वाभावसिद्धिस्तत्सिद्धौ सर्वज्ञाभावसिद्धिः। २ घटत इति शेषः। ३ अज्ञातव्यभिचारात्। ४ अनैकांतिकं पुनर्द्विधेत्याद्युक्तप्रकारेण। ५ निश्चितव्यभिचाराख्यमिति भावः। ६ स्वप्रमितावित्यर्थः। ७ प्रमाणविषयत्वमेव प्रमेयत्वं। ८ अप्रमेय। ९ गगनादौ हेतौ। १० कथंचिदभिन्नस्यैव। ११ निरपेक्षत्वात्। १२ घटः पटो न भवति पटो घटो न भवतीति व्यावर्त्तकस्याभावस्य भावात्।

ना[1]मनन्यथात्वस्याकरणात्, करणे वा तदेव तेषामन्योन्यमभावस्तस्य च तेभ्योऽनर्थान्तरत्वेन तद्धेतोरेव भावादिति । तस्य वैयर्थ्यमर्थांतरस्य तस्य प्रागभावादिभेदिनः कथंचिद्भावाविष्वग्भावेन तद्वदेवानित्यत्वोपपत्तेः । न तद्गतत्वेनाऽपि प्रमेयत्वस्यानैकांतिकत्वं, व्यभिचारस्य निश्चितस्येव संभाव्यस्यापि तत्राभावात् ।

संशयकरत्वादप्यनैकांति[2]कं वक्तव्यं । तद्यथा—श्रावणत्वं न हि तस्य शब्दे नित्यत्वेतरत्व[3]योरन्यत्र हेतुत्वमनवगतबहिरंन्वयस्य तदनु[4]पपत्तेः । न च तेन[5] विना तस्य संभवः सर्वस्याऽपि वस्तुसतस्तेन व्याप्तेः । ततः शब्दे तदुपलभ्यमानं तत्र संशयमावहति, किं श्रावणत्वान्नित्यः शब्द आहोस्विदनित्य इति । [6]तस्मादनैकांतिकमिति चेत् न; [7]सत्ववत्तस्यापि तद्विशेषस्य शब्दानित्यत्वे हेतुत्वस्यैवोपपत्तेः । बहिरन्वयानवगमे कथं तदिति चेत्, सर्वानित्यत्वे सत्वस्यापि कथं ? न हि तस्यापि बहिस्तदवगमः सर्वस्य पक्षीकृतत्वेन तद्बहिर्भूतस्याभावात् । नित्यस्य सहक्रमाभ्यामर्थक्रियावैकल्येन व्योमारविंदवत् सत्वानुपपत्तेः । ततो निश्चितव्यावृत्तिकस्य तस्य पक्ष एव तद्व्याप्तेरवगमादिति चेत्, सिद्धस्तर्हि श्रावणत्वस्यापि तत्रैव तदवगमो विपक्षात्सत्वस्य व्यावृत्तौ तद्विशेषस्यापि तस्य ततोऽवश्यं तया व्यावृत्तेर्निर्णयात् । निर्विशेषा[10]दपि सत्वात्तदनित्यत्वस्याऽपि सिद्धेः किं तद्विशेषेण

१ स्वरूपेण संश्लिष्टानां पदार्थानां । २ अनित्यः शब्दः श्रावणत्वात् । ३ अनित्यत्व । ४ श्रावणत्वस्य बहिरन्वयाभावेन शब्दनित्यत्वेतरत्वयोरन्यतरत्वसाधकत्वभावेऽपि शब्दः संभविष्यतीत्याकांक्षां प्रतिक्षिपन्नाह । ५ नित्यत्वेनानित्यत्वेन । ६ संशयमावहति यस्मात् । ७ सर्वमनित्यं सत्वात् । ८ हेतुत्वमिति शेषः । ९ यौगपद्य । १० श्रावणादिविशेषराहितात् ।

श्रावणत्वेनेति चेत् नैवमुत्पत्तिमत्त्वादावपि प्रसंगात् । ततः सामान्यवत्तद्विशेषस्याऽपि साध्याविनाभावनिर्णये कैदाचित्कुतश्चित्साध्यप्रतिपत्तेरुपपन्नं तद्विशेषस्याऽपि श्रावणत्वस्य तत्र गमकत्वमतो न तस्यानैकांतिकत्वकल्पनमुपपन्नम् ।

साध्यार्थाभावनिश्चितो विरुद्धो हेत्वाभासः । स चानेकधा, धर्मतद्विशेषाभ्यां धर्मितद्विशेषाभ्यां च विपरीतस्यैव साधनात् । तत्र धर्मविपरीतसाधनो यथा–नीलतज्ज्ञानयोरभेदः सहोपलंभनियमात् द्विचंद्रवदिति । तत्साधनत्वं चाऽस्य यौगपद्यार्थे सहशब्दे तन्नियमस्याभेदविरुद्धे नानात्व एव भावात् । अभेदेऽपि चंद्रद्वितये भाव इति चेत् न, तत्राऽपि यथाप्रतिभासं भेद एव भावात् । यथातत्वमभेदेपीति चेत् न, तदानीमभेदस्यानवभासनात् । न चानवभासिनि तस्मिंस्तन्नियमस्य तदनुगमः शक्यो गंतुमवभासिन्येव साध्ये तदनुगमस्य हेत्वंतरेषु प्रतिपत्तेः । सन्नपि तत्र तन्नियमो विरुद्ध एव धर्मविशेषविपरीतसाधनत्वात् । धर्मविशेषो हि नीलतज्ज्ञानयोः सिसाधयिषितां तात्विकमेकत्वं न च तस्यायं साधनः किं तात्विकस्यैव तस्यैव चंद्रद्वये स्वयं मिथ्याज्ञानविषयत्वेनातात्विके भावात् । ननु एवं पाकान्वितस्यैवानित्यत्वस्य घटे दर्शनात्तस्यैव शब्देऽपि कृतकत्वात्साधनं तदिति चेत् न, तत्रान्यत्र च तदन्वितस्यापि

१ अनित्यः शब्द उत्पत्तिमत्वादित्यादावपि । २ प्रयोगकाले । ३ श्रावणत्वादिविशेषात् । ४ "साध्यार्थाविनाभावनियमनिश्चितो विरुद्धो हेत्वाभास" इत्यपि कुत्रचित्पाठः । ५ क्रियाविशेषणमदः । ६ सहोपलंभनियमकाले । ७ धर्मविशेषविपरीतदर्शनं दर्शयति । ८ अभेदे । ९ धर्मो भेदस्तस्य विशेषस्तात्विकत्वं तस्माद्विपरीतमतात्विकत्वं तस्य साधनं तस्य भावस्तत्वं तस्मात् । १० पटादौ ।

तस्य प्रतिपत्तेः। न चैवं चंद्रद्वयादन्यत्र तात्विकस्योभयाभेदस्य प्रतिपत्तिर्यदवष्टंभेन नीलतद्वेदनयोरपि तन्नियमस्तस्यैव हेतुर्भवेत्ततो युक्तं धर्मविशेषविपरीतसाधनत्वेनास्य विरुद्धत्वम्।

धर्मिविपरीतसाधनस्य किमुदाहरणम्? इदं–न द्रव्यं भाव एकद्रव्यवत्त्वाद्द्रव्यत्ववदिति। द्रव्यत्वं हि यथा न द्रव्यं तथा न भावोऽपि। तत्र यदि तद्वदेकद्रव्यवत्वाद्भावोऽपि न द्रव्यं स भावोऽपि न भवेदिति, तन्न, कृतकत्वस्याप्येवं तत्साधनत्वापत्तेः। शक्यं हि वक्तुं घटस्यानित्यत्वमिवाशब्दत्वमपि। तत्र यदि तद्वत्कृतकत्वादनित्यत्वं शब्दस्याशब्दत्वमपि भवेदिति। यदि शब्दस्याप्रतिपत्तिराश्रयासिद्धिर्लिंगस्य, प्रतिपत्तावपि न तत्राशब्दत्वसाधनम् तत्पक्षस्य तत्प्रतिपत्त्यैव प्रतिक्षेपात्। तत्कथं कृतकत्वस्य धर्मिविपरीसाधनत्वमिति चेत् न, भावेऽप्येवमभावरूपत्वसाधनस्यानुपपत्तेरेकद्रव्यवत्त्वस्यापि तत्साधनत्वाभावप्रसंगात्। किं तर्हि तत्रोदाहरणमिति चेत्, क्षणभंगे सर्वोऽपि सत्वादिः, ततो हि धर्मिणः शब्दादेस्तत्क्षणे एव भंगे तदभावसिद्धेरवश्यंभावादन्यदा भंगस्य च तत्क्षणभंगत्वानुपपत्तेः। तत्क्षणभंगोऽपि तस्य क्षणांतरादेव व्यावृत्तिर्न स्वरूपात् तन्नायं प्रसंग इति चेत् न, ततोऽपि तस्यानर्थांतरत्वे प्रसंगस्यानिवृत्तेः तथा क्षणांतरादपि व्यावृत्तिः स्वरूपादपि तत्प्रसंगात्कथंचिदर्थांतरत्वस्य च स्याद्वादविद्वेषिणामसंभवात्। संभवेऽपि विरुद्धः

---

१ सहायेन। २ पर्यायः ३ धर्मिविपरीतस्योदाहरणमुक्तम्। ४ धर्मिविपरीतसाधनत्वापत्तेः।५ कृतकत्वानुमाने। ६ परो वक्ति। ७ सर्वस्मिन्पदार्थेपि सत्वादिहेतुना विनाशस्वभावत्वसाधनस्यानुपपत्तेः कुतः प्रतिपत्त्यप्रतिपत्तिपक्षस्याविशेषात्। ८ परवादी वक्ति तत्र विपरीतसाधने किमुदाहरणमिति। ९ उत्पत्तिमत्वादिः। १० उत्पत्तिसमये। ११ त्वद्भावसिद्ध्योरेवावश्यंभावलक्षणप्रसंगस्य॥

एव तत्र सत्त्वादिर्धर्मिविशेषविपरीतसाधनत्वात् । धर्मिविशेषो हि परस्य निष्कलः शब्दस्तद्विपरीतश्च स एव प्रवृत्तिरूपतया तुं द्विरूपस्तं च साधयतः स्पष्टमेव सत्त्वादेस्तद्विपरीतसाधनत्वं । एवं पुरुषोऽस्ति भोक्तृभावादिति । अस्यापि न हि पुरुषस्य भोग उपचारादप्रतिपन्ने तत्र तदनुपपत्तेरन्यतश्च तत्प्रतिपत्तावस्य वैफल्यात् । अत एव तत्प्रतिपत्तौ प्रतिपन्ने तत्र भोगोपचारस्ततश्च तस्य प्रतिपत्तिरिति परस्पराश्रयात्तात्त्विकोऽपि च तस्मान्न व्यतिरेकी, तेन तस्य गगनादेरिव भोक्तृत्वानुपपत्तेः, भोग्यसंनिधिसव्यपेक्षतया कादाचित्कत्वे तस्य तद्रूपतया पुरुषस्य कथंचिदनित्यत्वात्, सिद्धं तस्य साधयिषितकूटस्थपुरुषरूपधर्मिविशेषापेक्षया विपरीतत्वमित्युपपन्नं भोक्तृत्वस्य तत्साधनतया तद्विपरीतत्वसाधनमतो विरुद्धत्वम् । एवं विरुद्धाव्यभिचारिणोऽपि । तत्खल्विदमनित्यः शब्दः कृतकत्वात् घटवदिति । तदव्यभिचारित्वमस्य तत्रैव नित्यत्वसाधनस्य प्रत्यभिज्ञायमानत्वादेर्भावात् । विरुद्धत्वं निरन्वयविनाशविपरीतस्य सान्वयविनाशस्यैव साधनात् । तदपि कथं नित्यत्वहेतुना प्रतिबंधादिति चेत् न, तद्विषयस्यापि नित्यत्वस्य सविनाशान्वयतद्विनाशादविशेषात्, कूटस्थे तस्मिन्निरन्वयविनाशवदर्थक्रियाशक्तिवैकल्येन तद्व्याप्तस्य कस्याचिदपि हेतोरसंभवात् । कथमिदानीं अवि-

---

१ धर्मिविशेषविपरीतसाधनं दर्शयति । २ क्षणभंगसाध्ये । ३ साधनं । ४ सौगतस्य । ५ निरंशः । ६ स्वपररूपाद्यपेक्षया । ७ साधनस्य । ८ उपचारात्परमार्थतो वा । ९ व्यतिरेकिणा तात्त्विकेन । १० उदाहरणं । ११ सर्वथा नित्ये । १२ विरुद्धत्वं नास्त्यनैकांतिकत्वं कुतस्तद्विपरीते वर्तमानत्वात्, प्रकृतसाध्यद्वयस्याविशेषप्रतिपादनकाले युष्मन्मतेऽपि कथं तयोरन्योन्यविरुद्धत्वमित्याशंकते परः, सान्वयविनाशसविनाशनित्यत्वाभ्यामिति शेषः ॥

शिष्टे विषये तस्य तद्विरुद्धत्वमिति चेत् न, तत्र कथंचिद्विरोधस्यापि भावात्तन्न तदव्यभिचारिणोऽनैकांतिकत्वं विरुद्धत्वस्यैव भावात्। कथं वा तस्य तत्वं तद्बलादनित्यस्तद्विरुद्धबलान्नित्यो वा शब्द इति संशयादिति चेत्, [2]केवलस्यापि स्यात्ततोऽपि तत्र तत्संभवात्, कृतकत्वस्य निरन्वयविनाशवत् कौटस्थ्येऽपि काल्पनिकस्य भावात्, तात्विकस्यानेकांतनांतरीयकतयोभयत्राप्यसंभवात्। ततोऽनेकांतन्यायवेदिनां विरुद्ध एव विरुद्धाव्यभिचारी, तदन्येषां तु तद्वत्केवला अपि कृतकत्वादयः संशयहेतव [1]एवानेकांतरूपप्रक्रियापरिच्युतानां तेषां साध्यवदितरत्रापि संभवात्। तदुक्तम्—" विरुद्धाव्यभिचारी स्यात् विरुद्धो विद्वषां मतः। प्रक्रियाव्यतिरेकेण सर्वे संमोहहेतवः॥" इत्यन्येपि हेत्वाभासाः प्रतिपत्तव्याः।

किं पुनः साध्यं यदविनाभावो हेतुलक्षणमित्युच्यते। " साध्यं [3]शक्यम[4]भिप्रेतम[5]प्रसिद्धमिति "। न हि प्रसिद्धस्य साध्यत्वं पुनः पुनस्तत्प्रसंगेनानवस्थापत्तेः। नाप्यनभिप्रेतस्य साध्यं प्रत्यभिमुखचित्त[6]स्यैव लिंगतस्तत्प्रतिपत्तेः। नाप्यशक्यस्य तत्र हेतोरशक्तेः।

ततोऽपरं साध्याभासं। तच्च प्रत्यक्षादिविरुद्धविकल्पनादनेकधा। तत्र प्रत्यक्षविरुद्धं यथा–प्रतिक्षणविशरारवो भावा इति, प्रत्यक्षतस्तत्र कथंचिदविशरणस्यापि प्रतिपत्तेः। लोकोपाध्या-

---

१ संदिग्धानैकांतिकत्वादिति भावः। २ केनचिद्वादिना प्रत्याभिज्ञायमानत्वादित्येतस्य प्रतिपक्षसाधनस्याप्रयुक्तत्वे सति केवलस्येत्यर्थः, विपक्षसाधकरहितस्यापि। ३ अबाधितं। ४ इष्टं। ५ प्रतिवाद्यपेक्षयाऽप्रसिद्धं। ६पुंसः॥

रूढत्वान्मिथ्यैव तत्प्रतिपत्तिरिति चेत् नान्यथाप्रतिपत्तेरनध्यवसायाद्विचारतस्तदध्यवसायस्य चान्यत्र विरोधात् ।

अनुमानविरुद्धं यथा–न संति बहिरर्था इति साधनदूषणप्रयोगादिना तत्सद्भावस्यावस्थापनात् ।

आगमविरुद्धं यथा–नास्ति सर्वज्ञ इति मीमांसकस्य । तत्र "हिरण्यगर्भं प्रकृत्य सर्वज्ञ" इत्यादौ तत्सद्भावस्य श्रवणात् । न तस्य तत्सद्भावावेदने तात्पर्यमर्थवादत्वेन हिरण्यगर्भस्य सर्वज्ञतया स्तुतिविधावेवं तद्भावात् । अन्यथाऽऽदिमदर्थत्वेन तस्यानित्यत्वापत्तेरिति चेत्, कथं तत्रासता तेन स्तुतिः ? अध्यारोपितेन तेनेति चेत् न, आरोपणस्य मिथ्याज्ञानत्वेन वेदादसंभवात्न्यथाविधिपरोऽपि तस्मिन् अनाश्वासापत्तेः । ततस्तदावेदन एव तात्पर्यं तस्य । नचानित्यत्वे तस्य दोषो नित्यत्व एव तस्य वक्ष्यमाणत्वात् ।

स्ववचनविरुद्धं यथा–न वाचो वस्तुविषया इत्यस्य वस्तुविषयत्वस्य प्रतिज्ञानस्य विरोधात्, अवस्तुविषयत्वे चानर्थकवचनतया निग्रहस्थानत्वापत्तेः ।

लोकाविरुद्धं यथा–मिथ्यैव सर्वे प्रत्यया इति लोकस्य बहुलं जाग्रत्प्रत्ययेष्वमिथ्यात्वे एव विषयभावलक्षणेऽभिनिवेशात् । वासनादार्ढ्यादिवायं न वास्तवादमिथ्यात्वादिति चेत् न, तद्दार्ढ्यस्याप्येवं तत्प्रतीतिसम्यक्ताभिनिवेशोपनीतत्वेनावस्तुत्वापत्तौ

१ धर्मविपरीतसाधनोदाहरणनिरूपणावसरे । २ गुणवादत्वेन, "विरुद्धे गुणवादः स्यादनुवादावधारित" इति वचनात्, ३ स्तुतिरूपत्वेन । कर्मस्तुतिः, यजेत इत्यज्ञातज्ञापनरूपेऽज्ञातज्ञापको विधिरिति वचनात् । ४ आदिमान् सर्वज्ञाद्यर्थो यस्य स तथा । ५ कल्पितेन । ६ आरोपणसंभवप्रकारेण । ७ कारणात् । ८ वचनस्येति शेषः । ९ प्रकृत इति शेषः । १० तत्प्रतीतिसम्यक्ताभिनिवेशः ।

व्योमकुसुमादिवत्ततस्तेषु तत्कल्पनानुपपत्तेस्ततो विषयभावाद्देव तत्प्रतीतिवदन्यत्राऽपि तदभिनिवेश इति कथं न सर्वप्रत्ययमिथ्यात्वं लोकविरुद्धं ।

हेतुसाध्ययोरिव दृष्टांतस्याप्याभासो निरूपयितव्यः, अन्यथा तद्विलक्षणतया तस्य निरूपणानुपपत्तेरिति चेत् न, दृष्टांतस्यैव तदभावेऽप्यनुमानस्य बहुलमुपलंभेन तं प्रत्यनंगत्वात्, तमभ्युपगम्य तु ब्रूमः । साध्यसाधनधर्मयोः संबंधो यत्र निर्ज्ञातः स दृष्टांतः । स च द्वेधा, साधर्म्येण वैधर्म्येण च । तत्र शब्दस्य कृतकत्वादेरनित्यत्वे साधर्म्येण घटः वैधर्म्येणाकाशं तंत्र तैयोरन्वयमुखेन व्यतिरेकद्वारेण च संबंधपरिज्ञानात् ।

तदाभासाः पुनः साध्यविकलादयः—तत्र नित्यः शब्दोऽमूर्त्तत्वादित्यत्र कर्मवदिति साध्यविकलं निदर्शनमनित्यत्वात् कर्मणः, परमाणुवदिति साधनविकलं मूर्त्तत्वात्परमाणोः, घटवदित्युभयविकलं अनित्यत्वान्मूर्त्तत्वाच्च घटस्य । रागादिमान् सुगतो वक्तृत्वादित्यत्र रथ्यापुरुषवदिति संदिग्धसाध्यं रथ्यापुरुषे साध्यस्य प्रत्यक्षेणानिश्चयात्, वचनस्य च तत्र दृष्टस्य तदभावेऽपीच्छया संभवात् । अत एव मरणधर्माऽयं रागादित्यत्र असर्वज्ञोऽयं रागादित्यत्र च संदिग्धसाधनं संदिग्धोभयं च रागादिवदसर्वज्ञत्वस्यापि तत्र निश्चेतुमशक्यत्वात् । रागादिमान्[5] वक्तृत्वादित्यत्र अनन्वयं[6], तत्र[7] रागादेरसिद्धौ तदन्वयस्यासिद्धेः । अनित्यः शब्दः कृतकत्वात् घटवदित्यत्राप्रदर्शितान्वयं, यद्यत्कृतकं तत्तदनित्यमित्यन्वयप्रदर्शनस्यात्राभावात्, यदनित्यं

१ प्रयोग । २ घटाकाशयोः । ३ साध्यसाधनयोः । ४ मीमांसकाभ्युपगतादृष्टवत् । ५ सुगत इत्यनुवर्तते । ६ न विद्यते साध्यसाधनयोरन्वयो यत्र । ७ रथ्यापुरुषवदित्यत्र ॥

तत्कृतकमिति विपरीतान्वयम् । एवं नव साधर्म्येण दृष्टांताभासाः ।

एवं वैधर्म्येणाऽपि, तद्यथा-नित्यः शब्दोऽमूर्त्तत्वात्, यन्न नित्यं न तदमूर्त्तं परमाणुवदिति साध्याव्यावृत्तं परमाणोर्नित्यत्वात् । कर्मवदिति साधनाव्यावृत्तं अमूर्त्तत्वात्कर्मणः । आकाशवदित्युभयाव्यावृत्तमुभयोरपि तत्र भावात् । सुगतः सर्वज्ञ अनुपदेशालिंगानन्वयव्यतिरेकप्रमाणोपपन्नतत्ववचनत्वात्, यस्तु न सर्वज्ञो नासौ तद्वचनो यथा वीथीपुरुष इति संदिग्धसाध्यव्यतिरेकं, तत्र सर्वज्ञत्वाभावस्य दुरवबोधत्वात् । अनित्यः शब्दः सत्वात् यन्न तथा न तत्सत् यथा गगनमिति संदिग्धसाधनव्यतिरेकं, गगनसत्वस्यादृश्यत्वेनानुपलंभादभावासिद्धेः । संसारी हरिहरादिरविद्यादिमत्वात् यस्तु नैवं नासौ तथा यथा बुद्ध इति संदिग्धोभयव्यतिरेकं, बुद्धात्संसारित्वादिव्यावृत्तेः प्रमाणाभावेनानवधारणात् । नित्यः शब्दोऽमूर्त्तत्वात् यन्न नित्यं न तदमूर्त्तं यथा घट इत्यव्यतिरेकं, घटे सतोऽपि साध्यव्यतिरेकस्य हेतुनिर्वर्त्तनं प्रत्यप्रयोजकत्वादन्यथा कर्मण्यपि तस्य तत्वोपपत्तेः । अनित्यः शब्दः शब्दत्वात् वैधर्म्येणाकाशवदित्यप्रदर्शितव्यतिरेकं । तत्रैव यन्न सन्न तदनित्यमपि यथा नभ इति व्यतिरेकं साध्यनिवृत्त्या साधननिवृत्तेरनुपदर्शनात् । त इमे नव पूर्वे चाष्टादश दृष्टांताभासाः प्रतिपत्तव्याः !!!

कुतः पुनर्दृष्टांततदाभासयोः साधनदूषणभावस्याभावेऽभ्युपगमेनापि निरूपणमिति चेत् न, [3]तत्ववाद एव तयोस्तदभा-

१ संदिग्धः साध्यव्यतिरेको यत्र । २ अदृश्यार्थाभावस्य दुरवबोधत्वेन बौद्धैः स्वयमनभिमतत्वादिति भावः ॥ ३ वीतरागकथायां ।

वात् । प्रतिवादाद्यौ तु स विद्यत एव तद्वादस्यापि चिरंतनैरभ्यनुज्ञानादित्युपपन्नमेव तन्निरूपणं फलवत्वादिति ।

( पद्यम् )

स्मृत्यादेरनुमाधियोऽपि च मया हेत्वादिभिः सेतरैः ।
नीते निर्णयपद्धतिं स्फुटतया देवस्य दृष्ट्वा मतम् ॥
श्रेयो वः कुरुतान्मनोमलहरं स्फारादरं श्राविणां ।
मिथ्यावादतमो व्यपोह्य निपुणं व्यावर्णितो निर्णयः॥

इति श्रीमद्वादिराजसूरि-प्रणीते प्रमाणनिर्णयनाम्नि न्यायग्रंथे अनुमाननिर्णयः ॥

---

## आगमनिर्णयः ॥

अथेदानीमागमः । स चाप्तोपदेशः, तस्य च प्रामाण्यं ततस्तद्विषयप्रतिपत्तेरौपचारिकं, मुख्यतस्तस्या एव तद्भावात् । कथं पुनः शब्दादर्थप्रतिपत्तिस्तस्यार्थाभावेऽपि भावादिति चेत्, कथमिदानीं ज्ञानादपि कुतश्चित्तत्प्रतिपत्तिस्तदभावे तस्याऽपि भावाच्चंद्रद्वयादिवत् । पुरुषेच्छानुविधायित्वान्नार्थवत्त्वं शब्दस्येत्यपि न युक्तं ज्ञानेऽपि समानत्वात् । अस्ति हि तस्यापि तदनुविधायित्वं ब्रह्मप्रधानादिषु तद्वादिमतानुविधायितयैव तस्य प्रवृत्तेः, न वस्तुतथाभावादन्यथा स्वयं तत्प्रतिक्षेपस्यानु-

१ विजिगीषुकथायां। २ उपचारानुमानस्य । ३ आदिशब्देनाऽत्र साध्यदृष्टांतौ प्राह्यौ। ४ हेत्वाभासादिभिः। ५ निश्चयमार्गं। ६ श्रोतॄणां । ७ दूरीकृत्य । ८ अंगुल्यग्रे हस्तियूथशतमास्त इत्यादिवदिति शेषः । ९ वस्तुयथार्थत्वात् । १० सौगतैरिति शेषः ॥

पपत्तिप्रसंगात् । कारणदोषोपनीतमिथ्यावभासनस्वभावस्यैव तयाऽपि तत्र तस्य प्रवृत्तिर्नापरस्यं, तस्य वस्तुभावानुरोधितयैव प्रवृत्तेरिति चेत्, अनुकूलमिदमस्माकमेवं शब्दस्याऽपि वस्तुभानुरोधिनः शक्यव्यवस्थापनात् । सामान्यमेव शब्दस्य विषयस्तत्रैव संकेतस्य संभवात् तस्य चावस्तुत्वात्तद्वाचिनः कथमर्थवत्वमिति चेत् न, तस्य नित्यव्यापिरूपस्याभावेऽपि विषयतत्प्रत्यक्षयोरिव सदृशपरिणामरूपस्य तत्वत एव भावादन्यथा प्रत्यक्षेऽपि तस्यातात्विकेन ततो विषयव्यवस्थापनस्याभावप्रसंगात् । कथं वा तस्यावस्तुत्वे क्वचित्तन्निबंधन एकत्वसमारोपो यतस्तद्व्यवच्छेदार्थमनुमानपरिकल्पनं । सोऽप्यंतरंगादेव कुतश्चिदुपप्लवात्तत इति चेत् न, सदृशापरापरोत्पत्तिविप्रलंभान्नावधारयतीत्यस्य विरोधात् । तन्न सदृशपरिणामस्यातात्विकत्वं, अनुभवप्रसिध्दत्वाच्च । अन्यथा विसदृशपरिणामस्याप्येवं तन्निबंधनत्वेन स्वलक्षणस्यापि काल्पनिकत्वोपनिपातात् । चेष्टमेवेदम्, "भावा येन निरूप्यंते तद्रूपं नास्ति तत्वत" इति वचनादिति चेत् न, कुतः पुनर्निरूप्यमाणत्वाविशेषे भावरूपस्येव तत्वेरात्म्यस्यापि तात्विकत्वम् ? अपरिस्खलितनिरूपणत्वाच्चेत्, आगतं तर्हि सदृशपरिणामस्यापि तत्त्वं तदविशेषादित्युपपन्नमेव तद्विषयतया शब्दस्य वस्तुविषयत्वं । तच्च न तन्मात्रत्वादतिप्रसं-

१ जनित २ सम्यग्ज्ञानस्य ३ सम्यग्ज्ञानस्य ४ सौगतो वदति ५ "अर्थेन घटयत्येनां नहि मुक्त्वार्थरूपतां । तस्मात्प्रमेयाधिगतेः प्रमाणं मेयरूपतेति स्वयं सौगतैरुक्तप्रकारेण विषयतत्प्रत्यक्षयोस्तात्विकः सदृशपरिणामोऽस्ति तथा ६ स मा भूदित्याशंकायामाह ७ सर्वं क्षणिकं सत्वादिति ८ विसंवादात् ९ अनुभवप्रसिद्धत्वाविशेषेण तात्विकत्वापत्या १० स्वेनासाधारणस्वरूपेण लक्ष्यत इति स्वलक्षणं न तथा सति विसदृशपरिणामाभावे तस्य तथा लक्षयितुमशक्यत्वात्काल्पनिकत्वोपनिपातः ११ तत्वोपप्लववादी प्राह ॥

गात् । अपि चाप्तोपज्ञत्वेन गुणवत्वादाप्तिश्च वक्तुर्वाच्यवस्तुयाथात्म्यवेदित्वे सत्यविप्रलंभकत्वम् ।

आप्तश्च द्वेधा, विकलाविकलज्ञानविकल्पात् । विकलज्ञानस्याप्तत्वे तद्वचनस्याविसंवादकतया बहुलं व्यवहाराधिरूढत्वात् ।

अविकलज्ञानश्च द्वेधा–परोक्षप्रत्यक्षज्ञानविकल्पात् । परोक्षज्ञानो गणधरदेवादिस्तस्य प्रवचनोपनीतसकलवस्तुविषयाविशदज्ञानतया परोक्षज्ञानत्वात् । प्रत्यक्षज्ञानस्तु तीर्थङ्करः परमदेवस्तदपरोऽपि केवली तस्य निरवशेषनिर्धूतकषायदोषघातिमलोपलेपतया परमवैराग्यातिशयोपपन्नस्य सकलद्रव्यपर्यायपरिस्फुटावद्योतकारिणः प्रत्यक्षज्ञानस्य भावात् । प्रसाधितश्चायं[1] । ततो युक्तं तदुक्तत्वात्प्रवचनस्य गुणवत्वं, अन्यथा[2] तद्वचनस्यासंभवात् । संभव एव वीतरागस्यापि सरागवच्चेष्टासंभवादिति चेत् न, प्रयोजनाभावात् । क्रीडनस्य च रागातिरेकैमलीमसमानसधर्मतया परमवीतरागे भगवत्यनुपपत्तेः । वैराग्यातिशयश्च तत्र 'रागादिः क्वचिदत्यन्तहानिमान् प्रकृष्यमाणहानिकत्वात् हेम्नि कालिकादिवदित्यनुमानतोऽध्यवसायात् । व्यभिचारी हेतुः सकलशास्त्रविदः प्रभृति प्रकृष्यमाणहानिकत्वेऽपि ज्ञानस्य क्वचिदत्यंतहान्यभावादिति चेत् न, तस्यापि भस्मादौ निरवशेषस्यैव प्रहाणस्य प्रतिपत्तेः । आत्मन्येव रागादिवत्कुतो न तस्य तदिति चेत् न, तस्यैवात्मत्वेन तत्रैव तथा तदभावस्य विरोधात् । रागादेस्तु तदनन्यत्वेऽपि युक्तस्तत्राभावः सत्यपि तस्मिन् बोधस्वभावस्य तस्यापरिक्षयात् । तत्स्वभावश्चात्मा "तथैवाहं जानामि" इति प्रत्यक्षेण प्रतिवेदनात् । अनुमानस्य च तद्विलक्षणं

१ सर्वज्ञः २ अगुणवतः ३ आधिक्यं ४ निरवशेषेण ५ एकेंद्रियादौ ६ हेत्वर्थे तृतीया विभक्तिः ७ ॥

तस्मिन् प्रत्यक्षविरुद्धपक्षतयानुपपत्तेः । तत्र परमवीतरागतया निर्व्यभिचारहेतुबलावधारिते भगवति वचनप्रलंभः संभवति ।

कथमेवं तादृशस्य वचनमपि स्वार्थाभावादिति चेत् न, परार्थतयैव तद्भावात् । तयापि तत्र परानुग्रहाभिसंधेस्तत्र तद्भावात्, अपि तु सुकृतविशेषोपनिपातात्, स्वभावविशेषादेव, भानुमतोनलिनविकासवत्, उदन्वदंभोविवर्द्धनवच्च तुहिनद्युतेः॥

कथं तर्हि प्रत्यर्थनियतत्वं तद्वचनस्य सकलदर्शनोपजनिते तत्र सकलार्थताया एवोपपत्तेर्नियतविषयाभिसंधेश्च नयरूपतया तत्रासंभवादिति चेत् न, प्रश्नविषयं एव प्रत्यर्थनियतानेकस्वभावाधिकरणादपि तद्दर्शनात्तदुपपत्तेः । प्रश्नस्य च सकलविषयस्य युगपत्प्रश्नकारिण्यसंभवात् संभवे च भवत्येव तद्वचनात् कुतश्चिदप्यंतरंगमलविश्लेषविजृंभितप्रज्ञापाटवस्य गणधरदेवादेः सकलविषयप्रतिपत्तिः । अद्यापि कस्यचिद्बोधातिशयविशेषवतः सूत्रादेव तद्वृत्तिवार्त्तिकादिविवरणीयतदर्थविस्तारपरिज्ञानस्योपलंभात् ।

कः पुनः प्रवचनस्याप्तोपज्ञत्वेन गुणो यतः प्रामाण्यमिति चेत्, प्रमाणांतराविरोधलक्षणोऽविसंवाद एवं न ह्यसौ तत्र शब्दस्यैव सामर्थ्येन स्वतस्तस्योपाध्यायसेवावैफल्यप्रसंगेनाप्रत्यायकत्वात्, नाऽपि पुरुषमात्रस्य वचनमात्रेऽपि तत्प्रसंगात् । अस्ति प्रवचने ततस्तदर्थस्य कथंचित्प्रत्यक्षेणापरस्यानुमानेनात्यंतपरोक्षस्य च तदेकदेशैरविरुद्धतयैव प्रतिपत्तेः । के पुनस्तेऽर्था ये तथा ते प्रतिपत्तव्या इति चेत् । भावेष्वनेकांतः परिणामो

१ हेत्वर्थे तृतीया २ सतीति शेषः ३ स्वस्य प्रयोजनाभावात् ४ मोहात् ५ चंद्रात् ६ अर्थे इति शेषः ७ व्याक्रियमाण ८ अबाधस्वरूपः ९ अनिश्चायकत्वात् १०कस्य तदर्थस्य प्रत्यक्षेणाविरुद्धतया ततः प्रतिपत्तिरिति संबंधः एवमनुमानादावपि योज्यं ११ पूर्वापराविरुद्धतया तथैवोक्तं श्रीमदाशाधरदेवैः " दृष्टोऽर्थोऽध्यक्षतो वाक्यमनुमेयेऽनुमानतः । पूर्वापराविरोधेन परोक्षे च प्रमाणते " ॥

मार्गस्तद्विषयश्च । तत्रानेकांतो नाम तेषां युगपदनेकरूपत्वं । परिणामश्च क्रमेणास्ति हि तयोर्गुणपर्ययवद्द्रव्यमित्यादेरागमादिव प्रत्यक्षादेरपि प्रतिपत्तिश्चेतने स्वपरवेदनविकल्पाविकल्पविभ्रमाविभ्रमादिभिः स्वभावैरचेतने परिसामान्यविशेषगुणगुण्यादिभिस्तदेकांतभेदाभेदयोरप्रतिपत्त्या प्रतिक्षेपेण युगपदनेकरूपसाध्यक्षतः शक्तिभेदैश्च कार्यभेदप्रतिपत्तिहेतुकादनुमानतोऽपि निर्णयपथप्रापणात् ।

एवं परिणामस्य, तस्यापि स्मरणप्रत्यभिज्ञानाद्यनुपातिनश्चित्स्वभावस्याचित्स्वभावस्यापि कुंडलप्रसारणाद्यनुषंगिभुजंगाद्यात्मनः स्वानुभवादिंद्रियादप्यध्यक्षतोऽन्वीक्षणात् । एवमनुमानतोऽपि । तच्चेदं-क्रमादप्यनेकांतात्मा भावो युगपदप्यन्यथा तदनुपपत्तेः । नित्यानित्यात्मकस्य तत्र संशयादेर्दोषादभावे सकृच्चानैकरूपत्वमपि न स्यात् तदविशेषात् । माभूदिति चेत्, न तर्हि संशयादिरपि, तद्विकल्पस्यापि नानापरामर्शरूपत्वेनानेकांतात्मकत्वासंभवेऽनुपपत्तेः । भवतु सकृदनेकांतः, कथं तावता क्रमेणापि ? विरोधाभावादिति चेत् न, निरन्वयविनाशे तस्य चिरातिक्रांतवत्कार्यतत्कालमप्राप्तस्यानुपयोगेनावस्तुत्वापत्तेः, सान्वयविनाशे तु स एव परापरसमयेष्वपि तस्य स्वभाव इति तदात्मनः क्रमानेकांतस्य ततः साधनमविनाभावस्य तत्रैवाध्यवसायात् ।

कस्तर्हि मार्ग इति चेत्, निःश्रेयसप्राप्त्युपाय एव । स च त्रिरूपः "सम्यग्दर्शनज्ञानचारित्राणि मोक्षमार्ग" इत्यागमात् ।

१ सहभाविनो गुणाः; क्रमभाविनः पर्यायाः २ "सर्वथा सविकल्पत्वे तस्य स्याच्छब्दरूपता । सर्वथा निर्विकल्पत्वे स्वार्थव्यवसितिः कुतः" ३ स्वभावस्येति शेषः ४ युगपदिति भावः ५ ज्ञानस्य ६ युगपत् ७ अग्न्यभावे धूमसद्भावविरोधवत्; क्रमानेकांताभावे युगपदनेकांतसद्भावस्य विरोधाभावात् ८ चेतनादेः ९ अतीतवत् १० आगमस्य प्रमाणांतराविरोधलक्षणं दर्शयति ॥

अनुमानाच्च । तच्चेदं–त्रिरूपोऽपवर्गमार्गः अपवर्गमार्गत्वान्यथानुपपत्तेः । न चाऽत्र हेतोराश्रयासिद्धिरपवर्गवादिनां सर्वेषामपि तस्य प्रसिद्धत्वात् ।

नाप्यन्यथोपपत्तिः ज्ञानादेः प्रत्येकं तन्मार्गत्वाभावात् । तथा हि–न ज्ञानादेवापवर्गः प्रत्युत्पन्नतत्वज्ञानस्याप्यनपवृक्तस्यावस्थितेरन्यथोपदेष्टुरभावेनापवर्गार्थिनां तत्वज्ञानस्याभावप्रसंगात् ।

नापि दर्शनादेवायमभिरुचिरूपात् तद्विषयापरिज्ञाने तस्यैवासंभवात् । नापि ततस्तत्परिज्ञानसहायादनुष्ठानकल्पनावैफल्योपनिपातात् ।

नाऽपि अनुष्ठानमात्रात्, तद्विषयवेदनाऽऽदरयोरभावे तस्यैवाभावात् । ततो युक्तं त्रैरूप्यमेव तन्मार्गस्य ।

कथं पुनर्बंधेन तस्याविरोधे तत्परिक्षयरूपस्तस्मादपवर्ग इति चेत् न, साक्षादविरोधेऽपि तन्निदानविरोधितयाऽपि ततस्तदुत्पत्तेः । तथा हि–यद्यन्निदानविरोधि ततस्तत्परिक्षयः, यथा व्याधिनिदानवातादिविरोधिनो भैषज्यात् व्याधेः, बंधनिदानविरोधी चोक्तो मार्ग इति । बंधस्य च निदानं रागादिरास्रवस्तद्विरोधित्वं च मार्गस्य, तस्य भेषजस्येवातिशयतारतम्ये रागादेर्वातादेरिवापकर्षतारतम्यस्य प्रतिपत्तेः ।

भवतु नाम तदत्यंतातिशयदशायां तन्निदानपरिक्षयाद्बंधस्यानागतस्यानुत्पत्तेरभावः[3] प्रागवस्थस्य तु कथमिति चेत् न, तस्याप्याश्रवरूपस्नेहवशावस्थायिनस्तत्स्नेहापक्रमादेवाभावात् । तत्वाभिनिवेशरूपत्वान्मार्गस्य ततो मिथ्याभिनिवेशस्यैवापवर्त्तनं कथं रागादेरिति चेत् न, तस्यापि तद्विशेषत्वात् । कुतः पुनस्तस्य बंधनिबंधनत्वमिति चेत् । उच्यते । रागादिर्जीवस्य शरी-

१ अमुक्तस्य । २ आदिशब्दने श्लेष्मपित्तयोर्ग्रहणं । ३ अत्र हेत्वर्थे पंचमी ॥

रादिव्यतिरिक्तपुद्गलविशेषसंबंधहेतुस्तत्वान्मदिरार्थिनस्तद्रागादिवत् । यथावस्थितस्वपरज्ञानस्वभावस्यात्मनः कुतो रागादिरपि दोषो यतस्तस्य तत्संबंधनिबंधनत्वमिति चेत् न, तस्यापि तादृशात्प्राच्यादेव तत्संबंधतो भावात् । तथा हि–तादृशस्यात्मनो रागादिस्तसंबंधपूर्वकस्तत्वान्मदिरापीतस्य रागादिवत् सोऽपि तत्संबंधस्ततः प्राच्याद्रागादेरेव । न चैवमनवस्थितिर्दोषो हेतुफलरूपतया रागादितत्संबंधप्रबंधस्यानादित्वात् । तदुक्तम्—

जीवस्य संविदो[2] रागादिहेतुर्मदिरादिवत् ।
तत्कर्मागंतुकं तस्य प्रबंधोऽनादिरिष्यते ॥ इति ।

विषयस्तु मार्गस्य सप्तधा तत्वं " जीवाजीवाश्रवबंधसंवरनिर्जरामोक्षास्तत्वम् " इति सूत्रात् । तद्विषयत्वं च तस्य तन्निर्णयादेव प्रवृत्तेः ।

न हि जीवस्यानिर्णये तत्प्रवृत्तिरनिर्णीतस्यापवर्गार्थित्वासंभवात् । नाप्यजीवस्य तदा तत्संबंधस्य संबंधस्यानवगमेन तद्वियोगकांक्षानुत्पत्तेः । नाप्याश्रवस्य बंधस्य च तन्निदानैनिवर्त्तनद्वारेण शक्यनिवर्त्तनत्वानवगमेन कस्यचित्तन्निवर्त्तनायोद्यमानुपपत्तेः । नापि संवरस्य निर्जरामोक्षयोर्वा तदापि तस्य तन्निदानप्रत्यनीकत्वस्यं तयोर्बंधविश्लेषस्वभावत्वस्य चानवगमेन तदनुपपत्तेः । कुतस्तर्हि जीवादेर्निश्चय इति चेत् न, ज्ञानस्यैव स्वपरसंवेदनस्वभावस्यान्वयिनो जीवत्वात्तस्य च क्रमानिरूपणे न निर्णयात्, तद्विलक्षणस्याजीवस्य बंधतदास्रवयोश्च मार्गात्तदास्रवनिरोधस्यातद्वारेण बंधनिर्हरणस्याप्येकदेशसकलविकल्पस्योक्तनिर्णयत्वात् ।

१ रागादिहेतुकात् । २ संवित्स्वभावस्य । ३ पुंस इति शेषः । ४ अनवगमसमये । ५ निदानं कारणं ६ । तस्य निदानं तस्य प्रत्यनीकस्य भावस्तत्वं । ७ संवरस्य ॥ ८ एकदेशेन निर्जरा, सकलदेशेन मोक्षः ।

कथमेवं "तपसा निर्जरा च" इति संवरनिर्जरयोस्तपोनिमित्तत्वमभिहितं तपसः कायपरितापरूपस्यामार्गागत्वादिति चेत् न, तपःशब्देन तत्रापि तत्वज्ञानपरिपाकपरिकलितस्य बाह्येतरव्यापारोपरमलक्षणस्य चारित्रस्यैव प्रतिपादनादनशनादीनां तत्परिबृंहणपरतयैव तपस्त्वात् न मुख्यतः। यद्येवं चारित्रादेव तादृशादास्रवनिरोधे कथमभ्यधायि, "स गुप्तिसमितिधर्मानुप्रेक्षापरीषहजयचारित्रैः" इति गुप्त्यादेरपि तन्निरोध इति चेत् न, तस्यापकृष्टतद्विकल्परूपतया लेशतस्ततोऽपि तदुपपत्तेः। कीदृशस्तर्हि मोक्षे जीवो नीरूप एव न भवत्येव केवलमित्यभ्युपगमादिति चेत् न, ततः प्रागनुवृत्तिस्वभावतया प्रतिपन्नस्य तदापि पूर्ववत्तत्स्वभावपरित्यागानुपपत्तेः। न प्रागपि तस्य वास्तवमनुवृत्तिमत्वमध्यारोपादेव तस्य भावादिति चेत् न, अध्यारोपस्याप्यपरापरक्षणेष्वेकत्वाध्यवसायस्य तत्प्रतिपत्तिविकलादयोगात् क्षणपर्यवसायिनश्च कुतश्चित्प्रत्यक्षादिवत्तत्प्रतिपत्तेरनुपपत्तेः, अपरापरसमयानुपातित्वस्य तत्र वास्तवत्वे वस्तुसत एव तद्रूपतया जीवस्य व्यवस्थितेः। काल्पनिकत्वे तत्कल्पनाकारिण्यप्येवं प्रसंगेनानवस्थोपनिपातात्। ततो वास्तवमेव तस्यानुवृत्तिमत्वं कल्पनया तदनुपपत्तेरिति मोक्षे नीरूपत्वमुपपन्नम्।

भवतु तर्हि जीवस्तदानीं ब्रह्मवेदे ब्रह्मैव भवतीत्याम्नायात्

१ मोक्षमार्गादेव भवति चेदिति शंकायां। २ सूत्रे। ३ "भवहेतुप्रहाणाय बहिरभ्यंतरक्रियाविनिवृत्तेः परं सम्यक्चारित्रं ज्ञानिनो मतम्"। ४ तटस्थो वक्ति, बौद्धः प्रत्यवतिष्ठते, निःस्वभावः सर्वशून्य' इत्यर्थः। ५ "दीपो यथा निर्वृतिमभ्युपैति नैवावनिं गच्छति नांतरिक्षं॥ दिशं न कांचिद्विदिशं न कांचित्स्नेहक्षयात्केवलमेति शांतिं॥" जीवस्तथा निर्वृतिमभ्युपैति नैवावनिं गच्छति नांतरिक्षं। दिशं न कांचिद्विदिशं न कांचिन्मोहक्षयात्केवलमेति शांतिं। ६ विधिवादी वक्ति॥

ब्रह्मणैक्यमापन्न इति चेत् न, ब्रह्मणस्तदापि प्रागिव तद्भेदा-परित्यागे तदनुपपत्तेः। तत्परित्यागे चातादवस्थ्येनानित्यत्वापत्त्या नित्यं ब्रह्मेति प्रतिज्ञाव्यापत्तेः। प्रागपि तेनैक एव जीवः केवलमविद्यानिबंधन एव भेद इति चेत् न, तद्भेदिनस्तस्य तद्वदेव सुविशुद्धज्ञानस्वभावतया तस्याप्यविद्यानुपपत्तेः। भवतु को दोष इति चेत् न, तत्र नित्यनिर्मुक्ततया मुक्त्यर्थस्यात्मदर्शनश्रवणमननादेराम्नायाभिरूढस्यानर्थक्यापत्तेः!!!

अस्तु तर्हि जीवस्तदानीं निरवशेषबुद्ध्यादिवैशेषिकगुणनिर्मुक्त इति चेत् न, तस्य बुद्ध्यादिस्वभावत्वेन तदभावे सत्यभावस्यैव प्रसंगात्। तद्रूपत्वं च तस्याऽहं बोद्धाऽहं द्रष्टेति बुद्ध्यादिसमानाधिकरणतया प्रत्यवभासनादिति चेत्, समानाधिकरणतया प्रत्यवभासनस्य च द्रव्यत्वं सामान्यमित्यादावभेदनिबंधनस्यैव प्रतिपत्तेः। बुद्ध्यादेरात्मनस्तद्गुणत्वेन भेदान्मिथ्यैव तथा तत्प्रतिभासनमिति चेत्, कुतो भेदेऽपि स तस्यैव गुणो नाकाशादेरपि, समवायस्य तन्निबंधनस्य तत्रापि भावात्। स्वगतात् कुतश्चिद्विशेषादिति चेत्, सः कोऽपरोऽन्यत्र कथंचिदभेदात्? इति न ज्ञानादिव्यतिरेकी जीवः संभवतीति।

भवतु तर्हि तदा चिन्मात्रमेव तस्य तत्त्वमिति चेत्, किमिदं चिन्मात्रमिति? दृश्योपलंभव्यावृत्तं स्वावभासनमिति चेत्, तदुपलंभस्य तत्स्वभावत्वे कथं ततो व्यावृत्तिरनित्यत्वापत्तेरतत्स्वभावत्वे प्रागपि कथं स तस्य? तत्स्वभावया प्रकृत्या संसर्गादिति चेत्, न तर्हि कदाचिदपि ततो व्यावृत्तिः प्रकृत्या

१ पूर्वावस्थाया अभावत्वेन। २ यौगो वदति। ३ स्वरूपं, साख्यस्य मतमदः ४ घटाद्युपलंभव्यावृत्तं ५ अन्यथेति शेषः ६ मुक्तेः प्रागित्यर्थः. ७ प्रधानेन॥

नित्यव्यापिकतया तन्निबंधनस्य संसर्गस्य सर्वदाऽपि भावात् । नाऽपि रागादिमलविलयपरिशुद्धो निरन्वयपरिशुद्धो विनश्वरबोधक्षणप्रबंध एव तदा स इति सांप्रतं निरन्वयविनाशित्वे बोधक्षणानामर्थक्रियाकारित्वस्य प्रतिक्षिप्तत्वेन प्रबंधानुपपत्तेः ।

तस्मान्निर्मूलनिर्मुक्तकर्मबंधोऽतिनिर्मलः ।
[२]व्यावृत्तानुगताकारोऽनंतमानंदहग्बलैः[३] ॥ १ ॥
निःशेषद्रव्यपर्यायसाक्षात्करणभूषणः ।
जीवो मुक्तिपदं प्राप्तः प्रपत्तव्यो मनीषिभिः ॥ २ ॥

भवतु नाम निश्चितलक्षणेन प्रत्यक्षादिनाऽसंवादात्तद्विषयेण प्रामाण्यमागमस्यात्यंतपरोक्षे तु जगत्संनिवेशविशेषादौ कथं निर्णेतव्यमतन्निर्णये तत्वज्ञानस्यापरिपूर्णतया निःश्रेयसनिबंधनत्वाभावप्रसंगादिति चेत् न, तद्विषयस्यापि प्रवचनस्य प्रत्यक्षादिसंवादबलादवधारितप्रामाण्यप्रवचनसमानकर्तृकतया तन्निर्णयात् । न च निःशेषनिर्धूतरागादिदोषस्य सर्ववेदिनः क्वचित्तथ्या मिथ्या चान्यत्र वचनप्रवृत्तिः संभवति, रागादिमत्यतत्वज्ञ एव तथा तत्प्रवृत्तेरुपलंभात् । समानकर्तृकत्वमपि तत्र भागस्य भागांतरेण शास्त्रांतरवदविच्छिन्नादुपदेशपारंपर्यावगतेः ।

[७]पदादिरूपमेव प्रवचनं पदादेश्च स्फोटात्मनो निःकलस्य नित्यत्वेनाऽपौरुषेयत्वात् कथं तदात्मनः प्रवचनस्य पुरुषगुणवशात्प्रामाण्यमिति चेत् न, वर्णक्रमस्यैव पदादित्वात्तदपि तद-

१ नित्यत्वात् व्याप्तित्वाच्च । २ कर्मभ्यः व्यावृत्तः, संविदादिनानुगतः । ३ अनंतसुखदर्शनवीर्यज्ञानबलः । ४ अत्यंतपरोक्षवस्तुप्रतिपादकस्यागमांशस्य प्रामाण्यानिर्णये । ५ अत्यंतपरोक्षार्थप्रतिपादकागमांशस्य । ६ प्रत्यक्षादिप्रसिद्धार्थप्रतिपादकागमांशेन सह । ७ भाट्ट आह । ८ आदिशब्देन वाक्यस्य ग्रहणं । ९ निरंशस्य ।

न्यस्य तस्याप्रतिपत्तेः । वर्णानामितरेतरकालपरिहारावस्थायिनां कथमेकत्र वस्तुप्रतिपत्तावुपयोग इति चेत् । इतरेतरदेशपरिहारावस्थायिनां कारणानामप्येकत्र कार्ये कथं ? तेषां यथा–स्वदेशं भावादिति चेत् न, वर्णानामपि यथा स्वकालं विद्यमानत्वस्याविशेषात् । अवश्यं चैवमभ्युपगंतव्यमन्यथा ताल्वादिपरिस्पंदस्यापरापरसमयभाविनः एकत्र पदादिस्फोटाभिव्यक्तावप्यनुपयोगित्वेनानर्थकत्वप्रसक्तेः । कथं स्फोटादर्थप्रतिपत्तिः ? स्वाधीनाभिव्यक्तिकादनभिव्यक्तिकाद्वा ततोऽर्थप्रतिपत्तौ सर्वदा सर्वस्यापि ततस्तदापत्तेः। ततो वर्णक्रमनिवेशरूपमेव पदादिकं, तस्य च पौरुषेयत्वादुपपन्नं पुरुषगुणायत्तं तत्र प्रामाण्यं । कथं पुनरेवमनित्यत्वे शब्दस्य तस्माद् व्यवहारोऽप्रतिपन्नसमयात्तदनुपपत्तेः, प्रतिपन्नसमयस्यापि तस्य व्यवहारकालं यावदस्थितेरिति चेत् न, समयस्याऽप्ययमस्येत्यकरणात् । कथं तर्हीदृश ईदृशस्य वाचक इति ? ततस्तात्कालिकस्येव कालांतरभाविनोऽपि तादृशतया समयविषयत्वादुपपद्यत एव तस्य व्यवहारोपयोगित्वं । कर्त्तव्यश्चैवमंगीकारस्ताल्वादिव्यापारजन्मनो ध्वनिविशेषस्याप्यनित्यस्यैवमेव समयविषयतया वर्णाभिव्यक्तावुपयोगादित्यलमतिविस्तरेण ! ! !

कथं पुनरनित्यत्वे शब्दस्य स एवायमकार उकारो वा यः प्रागश्रावीति प्रत्यभिज्ञानं, सत्येव नित्यत्वे तदुपपत्तेरिति चेत् न; तद्गतात्कुतश्चित्सामान्यविशेषादेवं तदवक्लृतेः । तस्य सदृशपरिणामरूपत्वात्तादृशोऽयमिति भवतु ततस्तदवक्लृप्तिः कथं

१ व्यापारस्येति । २ रचना । ३ शब्दादित्यर्थः । ४ अयं शब्दोऽस्यार्थस्य वाचक इति । ५ ईदृशस्यार्थस्येदृशः शब्दो वाचक इति संकेतकरणं कथं । ६ कारणात् । ७ शब्दस्य । ८ कुतश्चित्सामान्यात् । ९ शब्दस्य ॥

पुनः स एवायमिति चेत् न, तथा ततोऽपि कलमकेशादौ तदुपलब्धेः। भ्रांतमेव तत्र तल्लूनपुनरुत्पन्नतया भेदिनि वस्तुत एकत्वस्याभावात् इति चेत् न, वर्णादिष्वपि तदविशेषात्, व्ययप्रादुर्भावयोस्तत्रापि प्रत्यक्षतोऽध्यवसायात्। तदनेन तद्बलात्तत्र व्यापित्ववर्णनमपि प्रत्याख्यातं घटादिष्वव्यापिष्वेव तत्रापि तद्भावात्। व्यापिनः सामान्यस्य भावादेव घटादिष्वपि तद्भाव इति चेत् न, तादृशस्य प्रवेदनासंभवात्तत्संभवेऽपि वर्णेष्वपि तत एव तदिति कथं ततस्तद्व्यक्तिषु तत्त्वैप्रतिपत्तिः ? कीदृशः पुनरसौ शब्दो यस्य प्रादेशिकस्यानित्यस्य चोपकल्पनमिति चेत्, पौद्गलिक इति ब्रूमः। तथा हि—पुद्गलविवर्त्तः शब्दः इंद्रियवेद्यत्वात् कलशादिसंस्थानवत्। तोयादिसंस्थानेन व्यभिचारस्तस्य सत्यपि तद्वेद्यत्वे तद्विवर्त्तत्वाभावात्। सोऽपि तोयादौ स्पर्शादिस्वभावचतुष्टयस्याभावेन तल्लक्षणस्य पुद्गलस्याभावादिति चेत् न, तत्राप्यनभिव्यक्तस्य गंधादेः स्पर्शवत्वादेव लिंगात्पृथिव्यामिव प्रतिपत्तेः, अनुद्भूतस्वभावत्वाच्च हेम्न्युष्णस्पर्शवदनुपलंभस्याप्यविरोधात्। पृथिव्यादिरूपतया चातुर्विध्यस्यापि धारण इवांष्णेरणरूपतया पुद्गलतत्वाविशेषेऽप्युपपत्तेः, तन्नायं नियमः, आपो रसरूपस्पर्शवत्यस्तेजोरूपस्पर्शवत् वायुः स्पर्शवानिति। नापि सामान्यैः कर्मभिर्व्यभिचारस्तेषां तद्वतो भेदे तद्वेद्यत्वस्याप्रतिवेदनात्; अभेदे तु तद्वतः पुद्गलतया तद्विवर्त्तत्वेन तेषु सपक्षस्यैव भावात्। मूर्त्तिमदिंद्रियवेद्यत्वस्यैव पौद्गलिकत्वेन व्याप्तिर्न च

१ पूर्वोक्तन्यायेन नित्यत्त्वनिराकरणेन वा। २ अस्त्विति शेषः, तथाचानिष्टं मीमांसकस्य कुतः वर्णेष्वेव व्यक्तिवत्तेन सामान्यानंगीकरणात्। ३ एकत्व ४ आदिशब्देन तेजोवायू गृहीतव्यौ। ५ पृथिव्यादेः पुद्गलत्वाविशेषात् भेदः कथमिति चेत्। ६ चलनात्मकैः ॥

शब्दस्य तदस्ति तदिंद्रियस्यामूर्त्तत्वादिति चेत्, कथमेवमन्यो-ऽपि हेतुर्दंडादिनिबंधनस्यैव कृतकत्वस्यानित्यत्वेन व्याप्तिर्न च तच्छब्दस्य विद्यत इत्यपि वदतो निवारयितुमशक्यत्वात् कृतकत्वमात्रस्यैव तेन व्याप्तौ प्रकृतेनाप्यैंद्रियत्वमात्रस्यैव सा वक्तव्या। किं वा तदमूर्त्तिमदिंद्रियम् ? आकाशमिति चेत् न, तस्य व्यापित्वेनातिदूरस्यापि शब्दस्य सर्वस्यैकेंद्रियत्वेन सर्वविषयस्यैकैनैकविषयस्य सर्वेण श्रवणप्रसंगात् । कर्णशष्कुलिविवरपरिच्छिन्नस्तस्य प्रदेश इति चेत् न, तस्य वास्तवत्वे कार्यत्वे च नभसः कलशादिवदनित्यत्वप्रसंगात्; काल्पनिकस्य च व्योमकुसुमादिवदिंद्रियत्वानुपपत्तेः । ततः क्षयोपशमस्वभावशक्तिविशेषाध्यासितजीवप्रदेशाधिष्ठितस्य शरीरावयवस्यैव श्रोत्रत्वं, तत्संस्पर्शनेनैव शब्दस्य श्रवणमिति न तस्येंद्रियान्तरात्कश्चिद्विशेषः । कथं पुनः पौद्गलिकत्वे शब्दस्य घटादिवदव्यापकत्वान्नानादेशस्थैर्युगपदुपलंभः ? श्रोत्रस्याप्राप्यकारित्वादिति चेत् न, तत्र प्राप्यकारि श्रोत्रं प्रत्यासन्नग्राहित्वात्, यन्नैवं तन्नैवं यथा नयनं, तथा च श्रोत्रमिति प्राप्यकारित्वस्य व्यवस्थापनात् । प्रत्यासन्नग्राहित्वं च तस्य तत एव तद्विवरवर्त्तिनः कीटकादिध्वानस्याप्रतिपत्तेः । साधनव्यावृत्तिश्च नयनात्ततोऽजनादेस्तद्गतस्याप्रतिवेदनात्तदप्राप्यकारित्वस्य च प्रत्यक्षनिर्णये निरूपितत्वात् ।

कथमेवमेकश्रोत्रप्रविष्टस्य वर्णस्य तदेवान्यैः श्रवणमिति ?

१ कृतकत्वादिः । २ श्रोत्रैकेंद्रियत्वेन । ३ पौद्गलिकत्वेन घटादेरव्यापकत्वेऽपि नयनस्य प्राप्यकारित्वाद्युपलंभो यथा, तथा शब्दस्यापि कुतो न स्यादिति प्रश्न इत्याह । ४ नृभिः ॥

न, वर्णस्य नानादिगभिमुखप्रवृत्तिकसदृशानेकस्वरूपतयैव स्वहेतुबलतो गंधवदेव प्रादुर्भावात। न हि गंधस्यापि युगपन्नानादेशस्थघ्राणेंद्रियप्राप्तिरेकस्यैवाव्यापिनो लोष्ठवदेव तदनुपपत्तेः। तन्नैवं प्रवचनस्यापौद्गलिकत्वपरिकल्पनमुपपन्नम्। ततः स्थितं सकलभावाधिष्ठानयोरनेकांतपरिणामयोर्मार्गतद्विषययोश्च प्रतिपादकं प्रवचनमविसंवादभावात्तद्भावस्य च निरूपितत्वात्प्रमाणमिति।

तच्च स्वविषयेऽनेकांतादौ तत्प्रत्यनीकधर्मसाद्वितीये वर्तमानं सप्तभंग्या प्रवर्त्तते। तद्यथा–स्यादनेकात्मैव भावः, स्यादेकात्मैव, स्यादुभयात्मैव, स्यादवक्तव्य एव, स्यादनेकावक्तव्य एव, स्यादेकात्मावक्तव्य एव, स्यादुभयात्मावक्तव्य एवेति।

अनेकात्मतत्प्रत्यनीकयोर्द्वित्वात्तदाश्रयावुभावेव भंगावुपन्नौ। कथममी सप्त भंगा इति चेत् न, प्रतिपित्सातावत्त्वेन तदुपपत्तेः। तथा हि–अनेकात्मनस्तत्प्रत्यनीकस्य च प्रत्येकमुभयोः क्रमेण युगपच्च प्रतिपित्सायां प्राथमिकाश्चत्वारो भंगाः, प्रथमभंगत्रयस्य क्रमेणावक्तव्यत्वेन सह बुभुत्सायामपरे त्रयो भंगा इति। एवं परिणामादावपि सप्रत्यनीके भंगसप्तकमुन्नेतव्यम्।

न चैवं भंगांतरस्य परिकल्पनं भवति प्रथमादेर्द्वितीयादिना योगे तृतीयाद्यंतर्भावस्य बहुलं पुनरुक्तस्य चोपनिपातात्। तन्न युक्तमिदं– "सप्तभंगीप्रसादेन शतभंग्यपि जायते।" इति प्रकृतधर्मविधिप्रतिषेधाभ्यामेव तदनुत्पत्तेर्जीवादिपदार्थगततदपरानेकधर्मविधिव्यवच्छेदबलालंबेन तद्वकल्पना-

१ अन्यथा नानादिगभिमुखवृत्तिकसदृशानेकस्वरूपत्वाभावे। २ प्रथमभंगस्य तृतीयभंगेन सह योगेन पुनरुक्तत्वमस्तित्वद्वयात्॥

यामत्यल्पमिदं शतभंगीत्यादि, ततः सहस्रभंग्यादेरपि संभवात् । एवकारोऽत्र सर्वत्रायोगव्यवच्छेदाय सर्वमनेकात्मैव नान्यथेति, एवमन्यत्रापि ।

तस्याप्यनेकात्मादिपदादेव प्रतिपत्तुमसामर्थ्ये भवत्वयं कस्यचित्सामर्थ्ये तु किमनेनेति चेत् न, तदाप्यप्रयोग एवेति नियमाभावात् । कथं तदभावः प्रतीतार्थप्रयोगस्य दोषत्वादिति चेत्, कथमिदानीं द्वावपूपौ त्वं पचसीत्यत्र द्वौपदत्वंपदयोः प्रयोगो विना ताभ्यां तदर्थप्रतिपत्तेः । लोके गुरुलाघवं प्रत्यनादरादिति चेत्, सिद्धमेवकारप्रयोगस्यापि निर्दोषत्वं । तच्चानेकात्मत्वं भावस्य स्यात्कथंचिद्धर्मरूपेणैव न धर्मिरूपेण तस्यैकस्यैव शब्दादिरूपस्य प्रतीतेरेकात्मत्वमपि धर्मिरूपेणैव, न धर्मरूपेण, तस्यापि तत्रानित्यत्वकृतकप्रयत्नानंतरीयकत्वादिरूपस्यानेकस्यैव प्रतिपत्तेः । कल्पनैव सा न वस्तुतत्त्वावगाहिनी बुद्धिरिति चेत् न, कल्पनाया एवाभिलाप्यानभिलाप्यस्वभावायाः स्याद्वादविद्वेषे सत्यनुत्पत्तेः । कल्पनायां न तद्विद्वेष इति चेदन्यत्रापि न स्यादविशेषात् । एवमुभयात्मकत्वमपि स्वगताभ्यामेव धर्मधर्मिभ्यां क्रमवुभुत्साविषयाभ्यां न भावांतरगताभ्यामवक्तव्यत्वमपि ताभ्यां युगपदेव न क्रमेणं नापि पदांतरेण तेन युगपदपि शतृशानयोः सच्छब्देनेव वक्तव्यत्वसंभवात् । एवमुत्तरत्रापि स्यान्निपातादतिप्रसंगनिवृत्तिरवगंतव्या ।

---

१ भंगेषु । २ द्वितीयादिभंगेष्वपि । ३ पुंस इति शेषः । ४ द्वाविति पदं च त्वमिति पदं च द्वौपदत्वं । ५ अनेकैकत्वविषया । ६ "धीर्विकल्पाविकल्पात्मा बहिरंतश्च किं पुनः । निश्चयात्मा स्वतः सिद्ध्येत्परतोऽप्यनवस्थितिः" । ७ स्वरूपापेक्षया ॥

भवतु नाम हेयोपादेयतत्वस्य सोपायस्य प्रवचनेन प्रतिपादनं तत्परिज्ञानस्य निःश्रेयसनिबंधनत्वेन पुरुषार्थहेतुत्वादनेकांतपरिणामयोः किमभिधानेनेति चेत् न, हेयादि[1]तत्वस्य तव्द्यापृत्वज्ञापनार्थत्वात्, तस्य न ह्यनेकात्मपरिणामविकलं तत्संभवति वस्तुमात्रस्यापि तव्द्यातस्यैवोपपत्तेर्निरूपितत्वात्। तथा चानेकांतन्यायविद्विषां तदभावेन तदव्याप्तस्य हेयादितत्वस्याप्यनुपपत्तेस्तत्प्रवचनानां तदाभासत्वमभिहितं भवति। ततः स्थितं युक्तिशास्त्राविरोधेन सकलभावाधिकरणानेकांतपरिणामनिःश्रेयसमार्गतद्विषयलक्षणस्य सत्यचतुष्टयस्य यथावदभिधानादन्ययोगव्यवच्छेदेन भगवज्जिनशासनमेव प्रमाणमिति।

श्रेयः श्रीजिनशासनं यदमलं बुद्धिर्मम स्तादमुं[2]––
द्रीची नित्यमनुत्तराप्यदमुईची मे रुचिर्वर्द्धताम् ॥
आ संसारपरिक्षयादमुमुईची भावना भावतो
भूयान्मे भवबंधसंततिमिमामुच्छेत्तुमिच्छावतः ॥

इति श्रीमद्भगवद्वादिराजसूरिप्रणीते प्रमाणनिर्णयनाम्नि न्यायग्रंथे आगमनिर्णयः।

॥ समाप्तिं पफाणायं श्रीप्रमाणनिर्णयः ॥

॥ शुभं भवतु ॥

---

१ मार्गविषयभूतसप्ततत्वस्य। २ अमुद्रीची, अदोऽचति प्राप्नोतीत्यमुद्रीची, यथा विष्वग्द्रीची। अदमुईची, अमुमुईची इति प्रयोगावपि प्राप्त्यर्थेऽदःशब्दाद्भवतः एतैस्त्रिभिः प्रयोगैः " वादिराजमनुशाब्दिकलोक " इति स्तुतिः साक्षात्कृतार्था भवति ॥